॥ श्री ॥

काशी संस्कृत ग्रन्थमाला

६७



95723

# सांख्यदर्शनम्

श्रीमद्विज्ञानभिक्षुकृतसांख्यप्रवचनभाष्यसमलङ्कृतम्

तर्कतीर्थोपाधिविभूषितबटुकनाथशास्त्रिण आत्मजेन न्यायो-पाध्याय-काव्यतीर्थ पं० ढुण्ढिराजशास्त्रिणा

सम्पादितम्

भूमिकालेखक पुनः सम्पादकश्च

डॉ० पं० गजाननशास्त्रि-मुसलगाँवकरः



चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० न० ११३६

जडाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी ( भारत )

THE

KASHI SANSKRIT SERIES

67

# SĀṄKHYADARŚANA

WITH

SĀNKHYA PRAVACHANA BHĀSHYA

By

SRĪ VIJNĀNA BHIKSHU

Edited by

Re-edited by

Dr. Pt GAJĀNANŚĀSTRI MUSALGĀONKAR

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publishers and Distributors of Oriental Cultural Literature*

P. O. Chaukhambha, P Box No 1139

Jadau Bhawan, K. 37/116, Gopal Mandir Lane

VARANASI-221001 ( INDIA )

# सांख्यदर्शन-प्रवेशभूमिका

यल्लीलया जायते च वर्द्धते क्षीयते जगत् ।
तन्नौमि पुरुष नित्यं प्रकृतिश्च मुहुर्मुहुः ॥

विदितमेवैतत्सर्वेषा विदुषा यदसार-ससारसागरस्यास्य पार यियासोर्मुमुक्षोश्च पारङ्गमयिता मोक्षयिता च कर्मोपासनज्ञानमितिकाण्डत्रयात्मको वेद एव। अत एव वेदोदितक्रियमाणकर्मसम्पादनसम्पत्त्या क्षालितान्त करणमुपासनाधिकारिणमनुशासति भगवन्त श्रीकपिलमहर्षय षडध्यायात्मक सारयदर्शनम्।

तत्र हि प्रथमेऽध्याये विषया निरूपिता। अतएवायमध्यायो विषयाध्याय' इति व्यवह्रियते। अत्राऽत्यन्तिकदु खनिवृत्तिरूपपरमपुरुषार्थस्यादौ विवेचन कृत्वा तदुपयोगित्वाद्बन्धहेतुपरीक्षा विधायाविवेकोच्छेदहेत्वादि निरूपितम्। ततश्च प्रासङ्गिक साख्याभिमतप्रमेयभूतप्रकृत्याद्यनुमानम्प्रदर्श्य उपादाननिरूपणान्ते प्रासङ्गिकम्पुनरपि मोक्षविवेचन कृतम्। अथ प्रमेयसिद्धयङ्गम्प्रमाणवर्णन विधाय साख्यसिद्धान्तमूलसत्कार्यवादस्थापनपूर्वकम्पुरुषस्य भोक्तृत्व विवेचितम्। एवञ्चात्राध्याये नव प्रकरणानि सङ्गृहीतानि।

द्वितीयेऽध्याये प्रधानकार्यं निरूपितमिति 'प्रधानकार्याध्याय' एष। अत्र सृष्टिप्रयोजन वर्णयित्वा स्वसिद्धान्तानुसारिणी सृष्टिप्रक्रिया स्फुटीकृता। निरस्तश्चान्ते भौतिकत्वमिन्द्रियाणाम्। एवञ्चात्राध्याये त्रीणि प्रकरणानि सङ्गृहीतानि।

तृतीयो वैराग्याध्याय। अत्र खलु महाभूताना निरूपण स्थूलसूक्ष्मभेदेन द्विविधशरीराणामुपादानवर्णनञ्च विधाय तद्द्वयात्ससृतिं व्यवस्थाप्य तयोर्विशेष समर्थित। तत सामान्यतो विशेषतश्च मुक्तिसाधनविवेचनपूर्वक बन्धहेतुविपर्ययस्य तत्कारणाऽशक्त्यादीनाञ्च स्वरूपमुक्तम्। पश्चाच्च कर्मविशेषाद् व्यक्तिभेदानुसारिणी देवादिप्रभेदा व्यष्टिसृष्टि प्रपञ्चिता। परमप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षसिद्धिरितिवदतु सृष्टिनिवृत्तिप्रकरणनिरूपणान्ते विवेकसिद्धयुपायाश्च वर्णिता। एवञ्चात्राध्यायेऽष्टौ प्रकरणानि सङ्गृहीतानि।

चतुर्थोऽयमाख्यायिकाऽध्याय । अत्र तत्त्वोपदेशादिभिर्विवेका-दीनामुत्पत्तौ हृदयग्राहिण्यो राजपुत्रादीनामाख्यायिका अध्याय-समाप्तिपर्यन्तमुक्ता । अत्र च विवेकज्ञानसाधनवर्णनात्मकमेकमेव प्रकरणम् ।

पञ्चमोऽयम्परपक्षनिर्जयाध्याय । अत्र मङ्गलाक्षेप समाधाय कर्मफलदातृतया ईश्वरम्मन्यमानानाम्मत खण्डयित्वाऽविद्यातो बन्ध-मङ्गीकुर्वता वेदान्तिना सिद्धान्तो दूषित । ताश्च धर्माधर्मयो सिद्धिम्प्रमाणयित्वा शब्दप्रामाण्ये परेषा बाधक निरस्य वेदाना नित्यत्व खण्डितम् । अत्र च मध्ये एव सुखादिसिद्धि विधाय प्रसङ्गा-गतशब्दविचारे वैयाकरणाभिमत-स्फोटवाद निरस्य शब्दस्य अनित्यत्व व्यवस्थापितम् । ततश्चात्माऽद्वैतनिरासपूर्वक मनसो विभुत्वादीना मत खण्डितम् । अथ मतान्तराभिमतपदार्थखण्डन कृत्वा पुनरपि द्वितीयाध्यायोक्तशरीरप्रकरणस्यावशिष्टाशो विशेषो विवेचित । ततश्च तृतीयाध्यायोक्तानामिन्द्रियाणामप्राप्यकारित्व निरस्तम् । तत शरीरारम्भकविचार कृत्वा मध्ये प्रासङ्गिकी विषमुक्तिमुपपाद्य उद्भिज्जशरीरस्यव्यवस्थाप्य नैयायिकाभिमतज्ञानेन्द्रादिनित्यत्वनि-रासाय पुनरन्तेचेश्वराऽसिद्धिरभिहिता । एवञ्चात्राध्याये षोडश-प्रकरणानि सङ्गृहीतानि ।

षष्ठोऽय तन्त्राध्याय । अत्र सारभूतशास्त्रार्थस्य सङ्कलन कृतम् । तत्र च प्रथममात्मास्तित्वेनोपसहारो विहित । ततश्च पुरुषाऽप-रिणामित्वप्रदर्शनाय जगत्कारण विचार्य पुरुषबहुत्वस्थापनपूर्वक तत्स्वरूपोपसहार सूत्रकारेण प्रादर्शि । अन्ते च सृष्टिप्रकारोपसहार विधाय शास्त्रवाक्यार्थोपसहार कृत । एवञ्चात्राध्याये पञ्च प्रकरणानि सङ्गृहीतानि ।

तथाच षडध्यायात्मके साख्यशास्त्रे द्विसप्ततिप्रकरणानि सूत्रकारेण सङ्गृहीतानि ।

अस्मिन् साख्यशास्त्रे पदार्थाना चतस्रो विधा प्रतिपाद्यन्ते । कश्चिदर्थं प्रकृतिरेव, कश्चिद्विकृतिरेव, कश्चिदुभयरूप , कश्चिदनु-भयरूपश्च ।

अत्र केवला प्रकृति प्रधानशब्दवाच्या मूलप्रकृति । नासावन्यस्य कस्यचिद्विकृति , प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्त्वरजस्तमो-गुणानां साम्यावस्थाया अभिधानात् । मूलञ्चासौ प्रकृतिश्च मूल-

प्रकृति । महत्तत्त्वादे कार्यकलापस्येयमेव मूलम्, नत्वस्या प्रधानभूताया मूलान्तरमस्ति अनवस्थाऽऽपातात्। बीजाङकुरवत प्रामाणिकी अनवस्था न दोषायेति केषाञ्चिन्मत न समीचीन प्रमाणाभावात्। प्रत्युत 'प्रकृति पुरुषञ्चैव विद्धचनादी उभावपी' इत्यादिप्रमाणवचनत प्रकृते सादित्वाभावबोधनेन निखिलप्रपञ्चमूलकारणत्वस्य स्मरणात्।

अत्रापि कार्य-कारणभावे विप्रतिपत्तिश्चतुर्धा सञ्जायते। यथा 'असत सज्जायते' इति सङ्गिरन्ते सौगता।

तच्च न समीचनम्। असतोऽलीकस्य शशविषाणवत् कारणत्वमेव न सम्भवति, तुच्छाऽतुच्छयो कार्य-कारणभावाऽयोगात्।

'सतोऽसज्जायते' इति नैयायिकादयोऽभिमन्यन्ते।

तदपि न प्रामाणिक, कारकव्यापारात् पूर्वमसता घटादीना शशविषाणवत् सत्तासम्बन्धलक्षणरूपोत्पत्ते असिद्धत्वदर्शनात्। न हि निपुणतमेनापि शिल्पिना असति गगनाऽरविन्दे सत्तासम्बन्ध विधातुम्पार्यते। अत एव कारकव्यापारात्प्रागपि कार्य सदेवास्ति। सत एव कार्यस्य अनभिव्यक्तस्य कारकव्यापारेणाभिव्यक्तिरुपपद्यते।

सतो ब्रह्मतत्त्वस्य विवर्त, प्रपञ्चकार्यजात, न तु वस्तुसत् इति वेदान्तिन।

एषा वेदान्तिनामपि मत न निर्दोषम्। अधिष्ठानारोप्ययोश्चिज्जडयो कलधौतरूप्यादिवत् सारूप्याभावेनाऽऽरोपाऽसम्भवात्, बाधाऽनुपलम्भाच्च।

तस्मात् सुख-दु ख-मोहात्मकस्य विश्वप्रपञ्चस्य तथाविधमेव कारणमवधारणीयम्। तथाचानुमानप्रयोगो विधेय –'विमत कार्यजात, सुख-दु ख-मोहात्मकवस्तुकारणकम्, तदन्वितत्वात्, यद्येनाऽन्वित तत् तत्कारणकम् यथा रुचकादिक सुवर्णान्वित तथाचेदम्, तस्मात् तथा।'

येय सुखात्मता तत् सत्त्वम्, या च दु खात्मता तद् रज, या च मोहात्मता तत् तम। एवञ्च सर्वस्य त्रिगुणात्मता वेदितव्या।

तथाहि—प्रत्येकम्भावास्त्रैगुण्यवन्तोऽनुभूयन्ते। यथा मैत्रदारेषु मदालसाया मैत्रस्य सुखमाविरस्तीति तम्प्रति तस्या सत्त्वगुणप्रादुर्भाव, तत्सपत्नीना दु खमिति ता प्रति रजोगुणप्रादुर्भाव। एवमन्यदपि घटादिक लभ्यमान सुखाकरोति, परैरपह्रियमाण दु खा-

करोति, उदासीनस्य च उपेक्षाविषयत्वेनाऽवतिष्ठते। उपेक्षाविषयत्वञ्च मोह एव। उपेक्षणीयेषु चित्तवृत्त्यनुदयात्, 'मुह' वैचित्य-इत्यस्माद्धातोर्मोहशब्दनिष्पत्तेश्च। तस्मात्सुख दु ख-मोहात्मकत्वेन त्रैगुण्यवत सर्वस्य कार्यजातस्य त्रिगुणात्मिका मूलप्रकृति प्रधानपदवेदनीयैव कारणमिति स्थितम्।

महत्तत्त्वमहङ्कार शब्दस्पर्शरूपरसगन्धाश्चैते सप्त पदार्था प्रकृति-विकृतय उभयरूपा सन्ति। तत्रान्त करणपदवेदनीय महत्तत्त्वम्, अहङ्कारस्य प्रकृति, मूलप्रकृतेस्तु विकृति। एवमहङ्कारोऽपि शब्दादिपञ्चकस्य श्रोत्रादीन्द्रियैकादशकस्य च प्रकृति, महत्तत्त्वस्य तु विकृति, शब्दादिपञ्चक हि यथाक्रम व्योम-वायु-तेजोजल-पृथिवीनाम्प्रकृति, अहङ्कारस्य तु विकृतिरिति बोध्यम्।

श्रोत्र त्वक्-चक्षु-जिह्वा-घ्राणाभिधानि पञ्च ज्ञानेन्द्रियाणि, वाक्-पाणि-पाद-पायूपस्थाभिधानि पञ्च कर्मेन्द्रियाणि। उभयात्मक मनश्चेत्येकादश, तथा व्योमादीनि पञ्चमहाभूतानीत्येषा षोडशाना गण षोडशक, स तु विकार एव (विकृतिरेव), स न कस्यापि प्रकृति।

यद्यपि पृथिव्यादीना गोवृक्षादयो विकारा, गवादीनामपि पयोबीजादय, तेषाञ्च दध्यङ्कुरादय, तथापि गवादयो न पृथिव्यपेक्षया तत्त्वान्तरम्। तेषा पार्थिवत्वात्, तत्त्वान्तरोपादानकारणस्यैवात्र प्रकृतिपदेन विवक्षितत्वात्।

पुरुषस्तु न कस्यापि तत्त्वस्य प्रकृति, नापि विकृति। इदमत्र वेदितव्यम्—

प्रकृतेर्महान्, महतोऽहङ्कार। स च सात्त्विकराजस तामसभेदात् त्रिविध। तत्र सात्त्विकादहङ्कारादेकादशेन्द्रियाणि, तामसात् तन्मात्रामिर्य शब्दादिपञ्चकम्। राजसात्तूभयम्। सत्त्व-तमोभ्यामेवोभयस्येन्द्रिय-तन्मात्रात्मककार्यस्य सिद्धौ रजसो व्यर्थत्वमभिमन्यन्ते कथन।

किन्तु तत्र युक्तम्, सत्त्व-तमसो स्वयमेव अक्रिये, स्वकार्यं घटयितु न प्रवर्तेते। रजसस्तु चलत्वभावनया यदा स चालयति तदैव ते स्वकार्यं कुरुत। अतएव उभयत्रापि कार्ये सत्त्वरजसो क्रियोत्पादनद्वारेणास्ति रजस कारणत्वमिति न व्यर्थ रज।

शब्दादिभ्यो महाभूतानि व्यजायन्त। प्राणास्तु न तत्त्वान्तरम्, किन्तु इन्द्रियाणा साधारणवृत्तय एव। एव कालोऽपि न तत्त्वान्तरम्।

भूतवर्तमान-भविष्यदितिव्यवह्रियमाणवस्तुव्यतिरेकेण स्वतन्त्रस्य तत्स्वरूपस्याऽनिरूपणीयतैवाऽस्ति । एतानि चतुर्विंशतिस्तत्त्वानि । 'पुरुष' पञ्चविंशतितम ।

न खल्वेक पुरुष, किन्त्वनेक । प्रतिशरीर भिन्न एव । अन्यथा कस्मिंश्चेदेकस्मिन् म्रियमाणे सर्वे म्रियेरन्, जायमाने च जायेरन्, एकस्मिन् पण्डिते मूर्खे वा सर्वेऽपि पण्डिता मूर्खा वा स्युरित्यनवस्थाऽऽपद्येत ।

सचायम्पुरुष, प्रकृतिप्रसूते प्रपञ्चात्मके जगति वर्तमानोऽपि स्वय निर्गुणत्वहेतुना पयसि वर्तमानपुष्कर-पलाशवन्निर्लेप साक्षीवाऽवतिष्ठते । पुरुषो हि नियमेन निस्त्रैगुण्यस्वभाववानेव । यतो हि प्रकृति-प्रसूतप्रपञ्चस्य सर्वस्यापि सुख-दु ख-मोहात्मकत्वेन भोग्यत्वात्, जडत्वाच्च तद्विलक्षणा, त्रैगुण्यातीत, पर, चेतनो भोक्ता कश्चिदस्त्येव । स एवात्मा पुरुषो वेति व्यपदिश्यते ।

अथ च पुरुषसान्निध्यवशात् जडा अपि प्राकृता भावाश्चेतनवदवभासन्ते । प्रकृतिसान्निध्यवशाच्च असङ्गोऽपि पुरुष कर्तेव सुखादिमानिव चावभासते ।

एवञ्च प्रकृति-पुरुषसयोग एवाऽखिल ससारप्रपञ्च निर्वाहयति । भोक्तृत्वयोग्यता हि पुरुषस्य चैतन्य, भोग्यत्वयोग्यता हि प्रकृतेर्जडत्वम् । भोक्तृयोग्यता-भोग्ययोग्यतावसरे अनयोरन्ध-पङ्गुन्यायेन सयोग सम्पद्यते ।

यथा कश्चिदन्ध स्वय जङ्घालोऽपि स्खलन परिजिहीर्षु कश्चित् चक्षुष्मन्तम्पङ्गुमपि स्कन्धेनोद्वहति । पङ्गुस्तु चक्षुष्मानपि यथेष्टविहारमभीप्सु कञ्चित् जङ्घालमन्धमपि समधितिष्ठति ।

तथैव अचेतना प्रकृति स्वप्रवृत्तिनिर्वाहाय चेतनमधिष्ठातारमुद्वहति चेतनोऽपि पुरुष स्वयमप्रसवधर्मा, स्वभोग्य-प्रसवित्रीम् प्रकृतिमधितिष्ठति ।

ततश्च भोग्येन प्रधानेन सम्भिन्न पुरुषो भोग्यधर्मभूत सुख-दु खमोहजात स्वात्मनि अभिमन्यमान कदाचिदपि दु खत्रयापघातम्प्रार्थयते । त चास्य प्रधानभूता प्रकृतिर्निष्पादयति ।

नित्याया प्रवृत्तिशीलायाश्च प्रकृतेर्विश्रमाभावेन सतत सर्ग स्यादिति न कश्चिदपि दु खत्रयान्मुच्येतेति केषाञ्चिन्मतन्तु नोचितम् । यत प्रकृतेरुपरमोऽपि सम्भाव्यते । यथा काचिन्नर्तकी नृत्यावलोक-

नोत्सुकान् रङ्गस्थान् पुरुषान् निजनृत्यकौशलन्दर्शयित्वा तेषामौ-त्सुक्योपरमे सति सा नृत्यक्रियातो निवर्तते, न पुनरनुत्सुकेभ्यस्तान्निज-नृत्यम्प्रदर्शयितुम्प्रवर्तते । तथा प्रकृतिरपि स्वसृष्टविषयभोगोत्सुकान् प्रत्येक पुरुषान् भोजयितुम्प्रवृत्ताऽपि य कञ्चन विगलितवासनम्पुरुष-म्पश्यति, तम्प्रति न पुन प्रवर्तते ।

केचनैव वदन्ति—चेतन स्वार्थं वा परार्थं वा प्रवर्तमानो दृश्यते, किन्तु अचेतना प्रकृति कथम्प्रवर्तते निवर्तते चेति । किञ्च अचेतनस्य स्यन्दनादेरिव चेतनाधिष्ठितायास्तस्या अचेतनाया अपि प्रवृत्ति-रुपपद्यते ।

किन्त्वेतन्न युक्तम् । जीवपुरुषाणाम्प्रकृतिस्वरूपाऽनभिज्ञतया-ऽधिष्ठातृत्वाऽसम्भवदर्शनात् । तस्मादस्ति सर्वार्थदर्शी परमेश्वर प्रकृतेरधिष्ठातेति सिद्धान्त ।

षडध्यायीरूपस्य साङ्ख्यदर्शनस्यापरमभिधानं 'षष्टितन्त्र'मपि वर्तते । प्राचीनतमकालात् भारतीयविद्वत्परम्परानुसारेण षडध्यायी-रूपस्य सूत्रात्मकसाङ्ख्यदर्शनस्य निर्माता देवहूतिमातृक कर्दम-प्रजापते पुत्रो विष्णोरवतार परमर्षि कपिल एवेति निष्प्रपञ्चम् । अत्र विषये साङ्ख्यशास्त्रीयतत्त्वपरिपक्वचिन्तनानां विद्वन्मूर्धन्यानां श्रीमदुदयवीरशास्त्रिणा साङ्ख्येतिहास-साङ्ख्यसिद्धान्तग्रन्थयो परि-शीलनेन साङ्ख्यशास्त्रे धृतावस्थानानां शतश सहस्रशो वा भ्रमाणा-मनायासेनैव समूलमुन्मूलन स्यादित्यत्र नास्ति संशयस्य लेशोऽपि ।

तथैव नतद् विस्मर्तव्यम्—कापिल साङ्ख्य सेश्वर विद्यते, नाऽनीश्वरम् । कापिलसाङ्ख्यमतानुसारेण अचेतना प्रकृतिर्जगदुपा-दानमीश्वरश्च केवलमधिष्ठाता ( नियन्ता ) सकलस्य जगत । 'ईश्वरासिद्धे' सूत्रेऽथवाऽन्यत्रापि यत्र ईश्वरनिषेधो दृष्टिगोचरो भवति, स उपादानभूतस्येश्वरस्यैवास्ते । अर्थात् ईश्वरे जगदुपादान-ताया एव निषेध, नेश्वरस्य निषेध ।

अतिरमणीय-साङ्ख्यदर्शनोपवने विहरणशीलस्य निखिलविश्वस्य विद्वन्मण्डलीमौलिमणेर्विज्ञानभिक्षो विपुलगम्भीरगूढार्थगर्भितानेक-दर्शनं हृदयावर्जकं साङ्ख्यप्रवचनाभिधं भाष्य षडध्यायात्मके कापिल-सूत्रे विद्योतते ।

कलिकालविजृम्भितं यदिदं साङ्ख्यदर्शनं जीर्णावस्थाम्प्राप्य सीदतीति । यथा पुराकालेऽस्य प्राचुर्येण अध्ययनाऽध्यापनमासीत्,

तथाऽस्मिन् समये तच्छतांशतोऽपि तन्नास्तीति वदितुं न खलु सङ्कोचमञ्चतिवच इति चेखिद्यते चेतः ।

तत्र घोरनिद्रयाऽऽलिङ्गितानां जनानां जागरणं विदधातुमीहया चौखम्बासंस्कृतसंस्थानाध्यक्षैः श्रेष्ठिकुलावतंसैः बाबू श्रीमोहनदासगुप्तमहोदयैः श्रीमद्विज्ञानभिक्षुविरचितेन सांख्यप्रवचनभाष्येण विभूषितं महामुनिकपिलप्रणीतं सांख्यसूत्रं सांख्यदर्शनाभिधं मुद्रयित्वा प्रकाशितमिति निवेदयतो मे मनसि महान् हर्षो वर्वर्ति ।

षडध्याय्यात्मकमिदं सांख्यदर्शनं यत्र क्वचित् अध्ययनाध्यापनादौ प्रवचनभाष्यसमेतमेव वर्तते । अतएव बहोः कालात् पूर्वं प्रथमवारं चौखम्बासंस्कृतपुस्तकमालायां प० रत्नगोपालभट्टद्वारा सशोध्य तदध्यक्षैः तत्प्रकाशितमभूत् ।

अवसिते च प्रथमसंस्करणे द्वितीयसंस्कारणावसरे उक्तपुस्तकमालाध्यक्षैः श्रेष्ठिकुलावतंसबाबूजयकृष्णदासगुप्तमहोदयैः प्रार्थिता प्रोत्साहिता नैयायिकविद्वच्चक्रचूडामणयो विद्वत्पूज्या श्रीढुण्ढिराजशास्त्रिकोपल्लेमहाभागा अस्य ग्रन्थरत्नस्य द्वितीयं संस्करणम्प्राकाशयन् ।

पुनरवसिते द्वितीयसंस्करणेऽपि तृतीयसंस्करणशोधनार्थं चौखम्बासंस्कृतसंस्थानाध्यक्षैः श्रेष्ठिकुलावतंसैः बाबूश्रीमोहनदासगुप्तमहोदयैः प्रोत्साहितो मुहुर्मुहुः सानुरोधं प्रार्थितश्चाहं तत्कार्ये प्रावर्तिषम् । दुरूहमपीदं कार्यं स्व० श्रीगुरुचरणान् स्मारं-स्मारं तदनुग्रहेणैव निर्विघ्नमृजुतया समपादयमितिशम् ।

विदुषामाश्रवः

गजाननशास्त्रिमुसलगाँवकरः

तृतीये वैराग्याध्याये महाभूतवर्णनं स्थूलसूक्ष्मभेदेन द्विविधशरीराणामुपादानवर्णनं च विधाय तद्द्वयात्मसृतिं व्यवस्थाप्य तयोर्विशेषः समर्थितः। ततः सामान्यतो विशेषतश्च मुक्तिसाधनविवेचनपूर्वकं बन्धहेतुविपर्ययस्य तत्कारणाशक्त्यादीनां च स्वरूपमुक्तम्। पश्चाच्च कर्मविशेषाद्व्यक्तिभेदानुसारिणी दैवादिप्रभेदा व्यष्टिसृष्टिः प्रपञ्चिता। परमप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षसिद्धिरिति भवतु सृष्टिनिवृत्तिप्रकरणनिरूपणान्ते विवेकसिद्ध्युपायाश्च वर्णिताः।

चतुर्थे आख्यायिकाध्याये विवेकज्ञानसाधनवर्णनात्मकमेकमेव प्रकरणम्। तत्र च तत्त्वोपदेशादिभिर्विवेकादीनामुत्पत्तौ हृदयग्राहिण्यो राजपुत्रादीनामाख्यायिका अध्यायसमाप्तिपर्यन्तमुक्ताः।

पञ्चमे परपक्षनिर्जयाध्याये मङ्गलाक्षेपं समाधाय कर्मफलदातृतयेश्वरं मन्यमानानां मतं खण्डयित्वाऽविद्यातो बन्धममीकुर्वतां वेदान्तिनां सिद्धान्तो दूषितः। ततश्च धर्माधर्मयोः सिद्धिम्प्रमाणयित्वा शब्दप्रामाण्ये परेषां बाधकं निरस्य वेदानां नित्यत्वं खण्डितम्। अत्र च मध्ये एव सुखादिसिद्धिं विधाय प्रसङ्गागतशब्दविचारे वैयाकरणाभिमतस्फोटवादं निरस्य शब्दस्यानित्यत्वं व्यवस्थापितम्। ततश्चात्माद्वैतनिरासपूर्वकं मनसो विभुत्ववादिनां मतं खण्डितं नवमे प्रकरणे। अथ मतान्तराभिमतपदार्थखण्डनं कृत्वा पुनरपि द्वितीयाध्यायोक्तशरीरप्रकरणस्यावशिष्टांशो विशेषो विवेचितः। द्वादशे प्रकरणे तृतीयाध्यायोक्तानामिन्द्रियाणामप्राप्यकारित्वं निरस्तम्। ततः शरीरारम्भकविचारं कृत्वा मध्ये प्रासङ्गिकीं नित्यमुक्तिमुपपाद्योद्भिज्जशरीरं व्यवस्थाप्य नैयायिकाभिमतज्ञानेच्छादिनित्यत्वनिरासाय पुनरप्यन्ते ईश्वरासिद्धिः समर्थिता। एवं चात्र षोडश प्रकरणानि सङ्गृहीतानि।

षष्ठे तन्त्राध्याये सारभूतशास्त्रार्थस्य सङ्कलनं कृतम्। तत्र च प्रथममात्मास्तित्वोपसंहारो विहितः। ततश्च पुरुषापरिणामित्वप्रदर्शनाय जगत्कारणं विधायं पुरुषबहुत्वस्थापनपूर्वकं तत्स्वरूपोपसंहारः प्रादर्शि सूत्रकारेण। अन्ते सृष्टिकार्योपसंहारं विधाय शास्त्रवाक्यार्थोपसंहारः कृतः। इत्थं चात्र पञ्च प्रकरणानि। तथा च षडध्याय्यात्मकेऽत्र साङ्ख्यशास्त्रे द्विचत्वारिंशत्प्रकरणानि सूत्रकारेण सङ्गृहीतानि।

अत्र शास्त्रे प्रत्यक्षानुमानागमभेदेन त्रिविधं प्रमाणं स्वीकृतम्। प्रधानं स्वतन्त्रं नित्यं जगत्कारणं कार्यकर्तृ महदादिपरिणामद्वारा। अत्र मते कार्यं सदेवोत्पद्यते। पुरुषो नाना भोक्ता च। वस्तुतस्तूदासीनोऽसङ्गः सच्चिद्रूपश्च। सुखादिकं च प्रकृतेरेव धर्मः। प्रकृतिमहत्तत्त्वाहङ्कारपञ्चतन्मात्राणि षोडश

विकाराः पुरुषश्चेति पञ्चविंशतितत्त्वानि साङ्ख्यैः स्वीकृतानि। तत्र पुमान् कार्यकारणभाववर्जितः सदा शुद्धः प्रकृतिः कारणमेव महदाद्याः सप्त प्रकृतयो विकृतयश्च षोडशकस्तु गणो विकार एवेति। तत्त्वपुरुषान्यताख्यात्याऽऽत्यन्तिकदुःखनिवृत्तिरेव मोक्षः। स एव च मुमुक्षुभिः शास्त्राध्ययनेन चित्तशुद्धिद्वारा यत्नतः साध्य इति।

षडध्यायात्मकस्येदं पठता पाठयता चात्र कुत आरभ्य विषयसंगत- किमात्मकं प्रकरणमिति बोद्धुमशक्यमासीत् प्रथमसंस्करणेऽस्मिन्नेतद्विषया- दिमत् सत्करणे पुस्तकमुद्रणान्ते प्रकरणसूच्यपि मुद्रिता न तु ग्रन्थे दर्शि- तत एवाध्येतृभिः प्रकरणानि बोध्यानि।

तदेव कृतेऽपि संशोधनयत्ने दृष्टिदोषाद्बुद्धिदोषवशाद्वा जाता अशुद्धीः क्षाम्यन्तो गुणगृह्या विद्वांसो मामवतीव श्रमं सफलयिष्यन्ति, भविष्यति चानेन प्रीतो भगवान् सर्वान्तर्यामी कमलारमणिरित्याशासे—

काश्याम् ई० १९२८
मार्गशिरनवम्यां बुधे

विदुषामनुचरः
ढुण्ढिराजशास्त्री

# साङ्ख्यप्रवचनभाष्यस्य विषयसूचीपत्रम्

## तत्र प्रथमे विषयाध्याये

## द्वितीये प्रधानकार्याध्याये



## तृतीये वैराग्याध्याये

## चतुर्थे आख्यायिकाध्याये

## पञ्चमे परपक्षनिर्जयाध्याये

## षष्ठे तन्त्राध्याये

# सभाष्यसांख्यदर्शनस्थप्रकरणानामनुक्रमणिका

## प्रथमाध्याये



## द्वितीये



## तृतीये



## चतुर्थे



## पञ्चमे

## षष्ठे



प्रकरणसमाप्तिः ।



॥ ॐ नमः श्रीपरमात्मने ॥

# सांख्यप्रवचनभाष्यम्

## विद्वद्वरश्रीमद्विज्ञानभिक्षुविरचितम्



### प्रथमोऽध्यायः

एकोऽद्वितीय इति वेदवचांसि पुंसि
सर्वाभिमानविनिवर्त्तनतोऽस्य मुक्त्यै ।
वैधर्म्यलक्षणभिदाविरहं वदन्ति
नाखण्डता ख इव धर्मशताविरोधात् ॥ १ ॥
तस्य श्रुतस्य मननार्थमथोपदेष्टुं
सद्युक्तिजालमिह सांख्यकृदाविरासीत् ।
नारायणः कपिलमूर्त्तिरशेषदुःख-
हानाय जीवनिवहस्य नमोऽस्तु तस्मै ॥ २ ॥
नानोपाधिषु यच्चानुरूपं भात्यनलार्कवत् ।
तत् समं सर्वभूतेषु चित्सामान्यमुपास्महे ॥ ३ ॥
ईश्वरानीश्वरत्वादि चिदेकरसवस्तुनि ।
विमूढा यत्र पश्यन्ति तदस्मि परमं महः ॥ ४ ॥
कालार्कभक्षितं सांख्यशास्त्रं ज्ञानसुधाकरम् ।
कलावशिष्टं भूयोऽपि पूरयिष्ये वचोऽमृतैः ॥ ५ ॥
चिदचिद्ग्रन्थिभेदेन मोचयिष्ये चितोऽपि च ।
सांख्यभाष्यमिषेणास्मात् प्रीयतां मोक्षदो हरिः ॥ ६ ॥
तत् त्वमेव त्वमेवैतदेवं श्रुतिशतोदितम् ।
सर्वात्मनामवैधर्म्यं शास्त्रस्यास्यैव गोचरः ॥ ७ ॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ उ २।४।५) इत्यादिश्रुतिषु परमपुरुषार्थसाधनस्याऽऽत्मसाक्षात्कारस्य हेतुतया श्रवणादित्रयं विहितम् । तत्र श्रवणाद्युपायाकाङ्क्षायां स्मर्यते—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः ॥ इति ,

ध्येयो योगशास्त्रप्रकारेणेति शेषः । तत्र श्रुतिभ्य श्रुतेषु पुरुषार्थ तद्धेतुज्ञानतद्विषयात्मस्वरूपादिषु श्रुत्यविरोधिनीरुपपत्ती षडध्यायीरूपेण विवेकशास्त्रेण कपिलमूर्त्तिर्भगवानुपदिदेश ।

ननु न्यायवैशेषिकाभ्यामप्येतेष्वर्थेषु न्यायः प्रदर्शित इति ताभ्या मस्य गतार्थत्वं, सगुणनिर्गुणत्वादिविरुद्धरूपैरात्मसाधकतया तद्युक्तिभिरत्रत्ययुक्तीनां विरोधेनोभयोरपि दुर्घटं च प्रामाण्यमिति । मैवम् । व्यावहारिकपारमार्थिकरूपविषयभेदेन गतार्थत्वविरोधयोरभावात् । न्यायवैशेषिकाभ्या हि सुखिदु ख्याद्यनुवादतो देहादिमात्रविवेकेनात्मा प्रथमभूमिकायामनुमापितः, परत्र परसूक्ष्मे प्रवेशासम्भवात् । तदीयं च ज्ञान देहाद्यात्मतानिरसनेन व्यावहारिकं तत्त्वज्ञानं भवत्येव । यथा पुरुषे स्थाणुभ्रमनिरासकतया करचरणादिमत्त्वज्ञानं व्यवहारतस्तत्त्व ज्ञानं तद्वत् । अत एव—

प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥

(गी ३।२९)

इति गीतायां कर्तृत्वाभिमानिनस्तार्किकस्य अकृत्स्नवित्त्वमेव कृत्स्नवित्सांख्यापेक्षयोक्तं, न तु मिथ्याज्ञानत्वमिति । तथा तदीयमपि ज्ञानमपरवैराग्यद्वारा परम्परया मोक्षसाधनं भवत्येवेति तज्ज्ञाना पेक्षयापि च सांख्यज्ञानमेव पारमार्थिकं, परवैराग्यद्वारा साक्षान्मोक्षसाधनं च भवति, उक्तगीतायामप्येतस्माकर्तृत्वविषयस्यैव कृत्स्नविषयसिद्धेः । "तीर्णो हि तदा भवति हृदयस्य शोकान्, कामादिकं मन एव मन्यमान " (बृ उ ४।३।२२) "सधीः स्वप्नो भूत्वा... ध्यायतीव लेलायतीव" (बृ उ ४।३।७), "स यत्तत्र किञ्चित् पश्यत्य नन्वागतस्तेन भवति" (बृ उ ४।३।१६) इत्यादि सांख्यश्रुतिशतेभ्यः ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥

(गी ३।२७)

निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः ।
दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ॥

(वि पु ६।७।२२)

इत्यादिनानाविधस्मृतिशतेभ्यश्च, न्यायवैशेषिकज्ञानस्य परमार्थ भूमौ बाधितत्वाच्च । न चैतावता न्यायाद्यप्रामाण्यम्, विवक्षितार्थे

देहाद्यतिरेकांशे बाधाभावात्, "यत्पर. शब्दः स शब्दार्थ" इति न्यायात्। आत्मनि सुखादिमत्त्वस्य लोकसिद्धतया तत्र प्रमाणान्तरानपेक्षणेन तदंशस्यानुवादत्वान्न शास्त्रतात्पर्यविषयत्वमिति।

स्यादेतत्। न्यायवैशेषिकाभ्यामत्राऽविरोधो भवतु। ब्रह्ममीमांसायोगाभ्यां तु विरोधोऽस्त्येव, ताभ्यां नित्येश्वरसाधनात्, अत्र चेश्वरस्य प्रतिषिद्ध्यमानत्वात्। न चात्रापि व्यावहारिक पारमार्थिकभेदेन सेश्वर निरीश्वरवादयोरविरोधोऽस्तु, सेश्वरवादस्योपासनापरत्वसम्भवादिति वाच्यम्, विनिगमकाभावात्। ईश्वरो हि दुर्ज्ञेय इति निरीश्वरत्वमपि लोकव्यवहारसिद्धमैश्वर्यवैराग्यायानुवदितुं शक्यते. आत्मन सगुणत्वमिव, न तु क्वाऽपि श्रुत्यादावीश्वरः स्फुटं प्रतिषिद्ध्यते, येन सेश्वरवादस्यैव व्यावहारिकत्वमवधार्यतेति।

अत्रोच्यते। अत्रापि व्यावहारिकपारमार्थिकभावो भवति—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ (गी १६।८)

इत्यादिशास्त्रैर्निरीश्वरवादस्य निन्दितत्वात्। अस्मिन्नेव शास्त्रे व्यावहारिकस्यैवेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादत्वौचित्यात्। यदि हि लोकायतिकमतानुसारेण नित्यैश्वर्यं न प्रतिषिद्ध्येत, तदा परिपूर्णनित्यनिर्दोषैश्वर्यदर्शनेन तत्र चित्तावेशतो विवेकाभ्यासप्रतिबन्ध स्यादिति साङ्ख्याचार्याणामाशय.। सेश्वरवादस्य न क्वापि निन्दादिकमस्ति, येनोपासनादिपरतया तच्छास्त्रं सङ्कोच्येत। यत्तु—

नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम्।

(म भा शां. प ३१६।२)

अत्र वः संशयो माभूज्ज्ञानं सांख्यं परं मतम्।

(म भा शा प ३०१।१०१)

इत्यादि वाक्य, तद् विवेकांश एव सांख्यज्ञानस्य दर्शनान्तरेभ्य उत्कर्षं प्रतिपादयति, न त्वीश्वरप्रतिषेधांशेऽपि। तथा पराशराद्यखिलशिष्टसंवादादपि सेश्वरवादस्यैव पारमार्थिकत्वमवधार्यते। अपि च—

अक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥

इति पराशरोपपुराणादिभ्योऽपि ब्रह्ममीमांसाया ईश्वरांशे बलवत्त्वम्। तथा—

न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
हेत्वागमसदाचारैर्यद्युक्तं तदुपास्यताम् ॥
(म भा शां. प २१०।२२)

इतिमोक्षधर्मवाक्यादपि पराशराद्यखिलशिष्टव्यवहारेण ब्रह्ममीमांसान्यायवैशेषिकाद्युक्त ईश्वरसाधकन्याय एव ग्राह्यो बलवत्त्वात्। तथा—

यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम् ।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥

इत्यादिकौर्मादिवाक्यैः सांख्यानामीश्वराज्ञानस्यैव नारायणादिना प्रोक्तत्वाच्च ।

किञ्च ब्रह्ममीमांसाया ईश्वर एव मुख्यो विषय उपक्रमादिभिरवधृतः । तत्रांशे तस्य बाधे शास्त्रस्यैवाप्रामाण्यं स्यात्, 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्। सांख्यशास्त्रस्य तु पुरुषार्थतत्साधनप्रकृतिपुरुषविवेकावेव मुख्यो विषय इति ईश्वरप्रतिषेधांशबाधेऽपि नाप्रामाण्यं "यत्परः शब्दः स शब्दार्थः" इति न्यायात्। अतः सावकाशतया सांख्यमेवेश्वरप्रतिषेधांशे दुर्बलमिति।

न च ब्रह्ममीमांसायामपीश्वर एव मुख्यो विषयो, न तु नित्यैश्वर्यमिति वक्तुं शक्यते। स्मृत्यनवकाशदोषप्रसङ्गरूपपूर्वपक्षस्य (ब्र. सू २।१।१) अनुपपत्त्या नित्यैश्वर्यविशिष्टत्वेनैव ब्रह्ममीमांसाविषयत्वाऽवधारणात्। ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यतया तु, 'अथातः परब्रह्मजिज्ञासा' इति न सूत्रितमिति।

एतेन सांख्यविरोधाद् ब्रह्मयोगदर्शनयोः कार्येश्वरपरत्वमपि न शङ्कनीयम् । प्रकृतिस्वातन्त्र्यापत्त्या 'रचनानुपपत्तेश्च, नानुमानम्' इत्यादिब्रह्मसूत्र (२।२।१) परम्परानुपपत्तेश्च। तथा "स पूर्वेषामपि गुरुः कालेनानवच्छेदात् (यो सू १।२६) इति योगसूत्रतदीयव्यासभाष्याभ्यां स्फुटमीशनित्यताऽवगमाच्चेति। तस्माद् अभ्युपगमवादप्रौढिवादादिनैव सांख्यस्य व्यावहारिकेश्वरप्रतिषेधपरतया ब्रह्ममीमांसायोगाभ्यां सह न विरोधः। अभ्युपगमवादश्च शास्त्रे दृष्टः। यथा विष्णुपुराणे—

एते भिन्नदृशां दैत्य ! विकल्पाः कथिता मया ।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥
(वि पु १।१७।८३) इति ।

अस्तु वा पापिनां ज्ञानप्रतिरन्ध्यार्थमास्तिकदर्शनेष्वप्यंशतः श्रुतिविरुद्धार्थव्यवस्थापनम्, तेषु तेष्वंशेष्वप्रामाण्यं च। श्रुतिस्मृत्यविरुद्धेषु तु मुख्यविषयेषु प्रामाण्यमस्त्येव। अत एव पद्मपुराणे ब्रह्मयोगदर्शनातिरिक्तानां दर्शनानां निन्दाप्युपपद्यते (प. पु. ६।२६३।६६-७५)। यथा तत्र पार्वतीं प्रतीश्वरवाक्यम्—

श्रृणु देवि ! प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम् ॥
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।
मयैव कथितं देवि ! कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ।
कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते ॥
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ।
परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते ॥
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया ।
सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव कथितं देवि ! जगतां नाशकारणात् ॥ इति ।

अधिकं तु ब्रह्ममीमांसाभाष्ये प्रपञ्चितमस्माभिरिति ।

तस्मादास्तिकशास्त्रस्य न कस्याप्यप्रामाण्यं विरोधो वा, स्वस्व-विषयेषु सर्वेषाम् अबाधात्, अविरोधाच्चेति ।

नन्वेवं पुरुषबहुत्वांशेऽप्यस्य शास्त्रस्याभ्युपगमवादत्वं स्यात् । न स्यात्, अविरोधात् । ब्रह्ममीमांसायामपि "अंशो नानाव्यपदेशात्" (ब्र सू २।३।४३-५०) इत्यादिसूत्रजातैर्जीवात्मबहुत्वस्यैव निर्णयात् । साङ्ख्यसिद्धपुरुषाणामात्मत्वं तु ब्रह्ममीमांसया बाध्यत एव । 'आत्मेति तूपगच्छन्ति' (ब्र सू ४।१।३) इति, तत्सूत्रेण परमात्मन एव परमार्थभूमावात्मत्वाऽवधारणात् । तथापि च साङ्ख्यस्य नाप्रामाण्यम् । व्यावहारिकात्मनो जीवस्येतरविवेकज्ञानस्य मोक्ष-साधनत्वे विवक्षितार्थे बाधाभावात् । एतेन श्रुतिस्मृतिप्रसिद्धयोर्नाऽऽत्मैकात्मत्वयोर्व्यावहारिकपारमार्थिकभेदेन अविरोध इति ब्रह्ममीमांसायां (२।३।४३ भा ) प्रपञ्चितमस्माभिरिति दिक् ।

नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्याय्याः पौनरुक्त्यमिति चेत् ? नैवम् । संक्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात् । अत एवाऽस्याः षडध्याय्या योगदर्शनस्येव साङ्ख्यप्रवचनसंज्ञा युक्ता । तत्त्वसमासाख्यं हि यत् संक्षिप्तं साङ्ख्यदर्शनं तस्यैव प्रकर्षेणास्यां निर्वचनमिति । विशेषस्त्वयं यत् षडध्याय्या तत्त्वसमासाख्योक्तार्थविस्तरमात्रम् । योगदर्शने त्वाभ्यामभ्युपगमवादप्रतिषिद्धस्यैवेश्वरस्य निरूपणेन न्यूनतापरिहारोऽपीति । अस्य च साङ्ख्यस्य साङ्ख्यता—

संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।
तत्त्वानि च चतुर्विंशत् तेन साङ्ख्याः प्रकीर्तिताः ॥

(महाभा शा प ३०६।४३)

इत्यादिभ्यो भारतादिवाक्येभ्य । संख्या सम्यग्विवेकेनाऽऽत्मकथनमित्यर्थः । अत्र साङ्ख्यशब्दस्य योगरूढतया "तत्कारणं साङ्ख्ययोगाऽधिगम्यम्" (श्वे उ ६।१३) इत्यादि श्रुतिषु ।

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।

(गी २।३९)

इत्यादिस्मृतिषु च साङ्ख्यशब्देन साङ्ख्यशास्त्रमेव ग्राह्यं, न पुनरर्थान्तरं कल्पनीयमिति ।

तदिदं मोक्षशास्त्रं चिकित्साशास्त्रवच्चतुर्व्यूहम् । यथा हि—रोग, आरोग्य, रोगनिदानं, भैषज्यम् इति चत्वारो व्यूहाः चिकित्साशास्त्रस्य प्रतिपाद्या, तथैव हेयं, हानं, हेयहेतु, हानोपायश्चेति चत्वारो व्यूहा मोक्षशास्त्रस्य प्रतिपाद्या भवन्ति, मुमुक्षुभिर्जिज्ञासितत्वात् । तत्र

त्रिविधं दुःखं हेयम् । तदत्यन्तनिवृत्तिर्हानम् । प्रकृतिपुरुषसंयोगद्वारा चाऽविवेको हेयहेतुः । विवेकख्यातिस्तु हानोपाय इति । व्यूहशब्देन चैषामुपकरणसंग्रहः ।

तत्रचादौ फलत्वेनाभ्यर्हितं हानं, तत्प्रतियोगिविधयैव च हेयं प्रतिपादयिष्यन् शास्त्रकारः शिष्याऽवधानाय शास्त्राऽऽरम्भं प्रतिजानीते—

(सू.)अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥१॥

अथशब्दोऽयमुच्चारणमात्रेण मङ्गलरूपः । अत एव 'मङ्गलाचरणं शिष्टाचारात्' इति स्वयमेव पञ्चमाध्याये (५।१) वक्ष्यति । अर्थस्त्वथशब्दस्याधिकार एव । प्रश्नानन्तर्यादीनां पुरुषार्थेन सहान्वयासम्भवात् । ज्ञानाद्यानन्तर्यस्य च सूत्रैरेव वक्ष्यमाणतया तत्प्रतिपादनवैयर्थ्यात् । अधिकारभिन्नार्थत्वे शास्त्रारम्भप्रतिज्ञाद्यलाभप्रसङ्गाच्च । तस्मात् पुरुषार्थस्योपक्रमोपसंहारदर्शनादधिकारार्थत्वमेवोचितम् । 'तदुच्छित्तिः पुरुषार्थः' (६।७०) इत्युपसंहारो भविष्यतीति ।

अधिकारश्चाधिक्येन प्राधान्येनारम्भणम् । आरम्भश्च यद्यपि साक्षाच्छास्त्रस्यैव तथापि तद्द्वारा शास्त्रार्थतद्विचारयोरपीति । तथा च साधनाद्युपकरणसहितो यथोक्तपुरुषार्थोऽधिकृतः प्राधान्येन निरूपयितुमस्माभिः प्रारब्ध इति सूत्रवाक्यार्थः ।

त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकं च दुःखम् । तत्रात्मानं स्वसंघातम् अधिकृत्य प्रवृत्तमित्याध्यात्मिकम्—शारीरं मानसं च । तत्र शारीरं व्याध्याद्युत्थम्[1] । तथा भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमित्याधिभौतिकम्-व्याघ्रचोराद्युत्थम् । देवानग्निवाय्वादीन् अधिकृत्य प्रवृत्तमित्याधिदैविकम्, दाहशीताद्युत्थमिति भावः । यद्यपि सर्वमेव दुःखं मानसं तथापि मनोमात्रजन्यत्वाऽजन्यत्वाभ्यां मानसत्वाऽमानसत्वविशेषः । एषां त्रिविधदुःखानां याऽत्यन्तनिवृत्तिः स्थूलसूक्ष्मसाधारण्येन निःशेषतो निवृत्तिः, सोऽत्यन्तः परमः पुरुषार्थः पुरुषाणां बुद्धेरिष्ट इत्यवान्तरवाक्यार्थः ।

तत्र स्थूलं दुःखं वर्तमानावस्थम् । तच्च द्वितीयक्षणादुपरि स्वयमेव नङ्क्ष्यति । अतो न तत्र ज्ञानापेक्षा । अतीतं तु प्रागेव नष्टमिति न तत्र साधनापेक्षेति परिशेषादनागतावस्थसूक्ष्मदुःखनिवृत्तिरेव

[1] वातपित्तश्लेष्मणां वैषम्येण जनितं शारीरम् । कामक्रोधलोभमोहमदमत्सरादीनां प्रक्षेपेण भवम् मानसिकञ्च ।

पुरुषार्थतया प्रकृते पर्यवस्यति। तथा च योगसूत्रम्—"हेयं दुःखमनागतम्" ( यो. सू. २।१६ ) इति। निवृत्तिश्च न नाशः, अपि त्वतीतावस्था, ध्वंसप्रागभावयोरतीतानागतावस्थास्वरूपत्वात्, सत्कार्यवादिभिरभावानङ्गीकारात्।

ननु कदाचिदप्यवर्तमानमनागतं दुःखमप्रामाणिकम्। अतः खपुष्पनिवृत्तिवत् तन्निवृत्तेर्न पुरुषार्थत्वं युक्तमिति। मैवम्, सर्वत्र हि स्वस्वकार्यजननशक्तिर्यावद्द्रव्यस्थायिनीति पातञ्जले सिद्धम्। दाहशक्तिशून्यस्याग्न्यादेः क्वाप्यदर्शनात्। सा च शक्तिरनागतावस्थतत्तत्कार्यरूपा। इयमेव चोपादानकारणस्वरूपयोग्यतेत्यपि गीयते। अतो यावच्चित्तसत्ता तावदेवानागतदुःखसत्तानुमीयते, तन्निवृत्तिश्च पुरुषार्थ इति।

जीवन्मुक्तिदशायां च प्रारब्धकर्मफलातिरिक्तानां दुःखानामनागतावस्थानां बीजाख्यानां दाहः, विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेषः। बीजदाहश्चाविद्यासहकार्युच्छेदमात्रम्, ज्ञानस्याविद्यामात्रोच्छेदकत्वस्य लोके सिद्धत्वात्। अत एव चित्तेन सहैव दुःखस्य नाशः। ज्ञानस्य साक्षाद्दुःखविनाशकत्वे प्रमाणाभावादिति।

ननु तथापि दुःखनिवृत्तिर्न पुरुषार्थः सम्भवति, दुःखस्य चित्तधर्मत्वेन पुरुषे तन्निवृत्त्यसम्भवात्। दुःखनिवृत्तिशब्दस्य दुःखानुत्पादार्थकत्वेऽपि पुरुषे तस्य नित्यसिद्धत्वात्।

यच्च कण्ठचामीकरवत् सिद्धेऽप्यसिद्धत्वभ्रमात् पुरुषार्थता स्यादिति, तन्न; एवमपि पुमान्निर्दुःख इति श्रवणमननोत्तरं दुःखहानार्थं निदिध्यासनादौ प्रवृत्त्यनुपपत्तेः। यतोऽप्यायासलभ्ये ह्युपाये फलनिश्चयादेव प्रवृत्तिर्भवति। प्रकृते तु श्रवणमननाभ्यां सिद्धत्वज्ञानात्प्रामाण्यज्ञानाऽनास्कन्दितः फलस्याऽसिद्धत्वनिश्चयोऽस्तीति। किञ्च भवतु कदाचिद्भ्रमादिना पुरुषेच्छाविषयत्वं दुःखाभावस्य, श्रुतिस्तु मोहनाशिनी कथं सिद्धस्य फलत्वं प्रतिपादयेत्? "तरति शोकमात्मवित्" (छा. उ. ७।१।३), "विद्वान् हर्षशोकौ जहाति" इत्यादिरिति।

अत्रोच्यते। "न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" ( सां. सू. १।१९ ) इति हेयहेत्ववधारकसूत्रेणैवायं पूर्वपक्षः समाधास्यते। तथाहि—प्रतिबिम्बरूपेण पुरुषेऽपि सुखदुःखे स्तः, अन्यथा तयोर्भोग्यत्वानुपपत्तेः। सुखादिग्रहणं हि भोगः, ग्रहणं च तदाकारता। सा च कूटस्थचितो बुद्धेरर्थाकारवत् परिणामो न सम्भवतीत्यगत्या प्रतिबिम्बरूपतायामेव पर्यवस्यति।

अयमेव बुद्धिवृत्तिप्रतिबिम्बो "वृत्तिसारूप्यमितरत्र" (यो सू १।४) इति योगसूत्रेणोक्तः। 'सत्त्वे तु तप्यमाने तदाकारानुरोधात् पुरुषोऽप्यनुतप्यत इव दृश्यते' इति योगभाष्ये (२।१७) च तदाकारानुरोधशब्देन विशिष्यैव तापादिदुःखस्य प्रतिबिम्ब उक्तः। अत एव च पुरुषस्य बुद्धिवृत्त्युपरागे स्फटिक दृष्टान्तं सूत्रकारो वक्ष्यति-'कुसुमवच्च मणिः' (सा सू २।३५) इति।

वेदान्तिभिरपि चेतनेऽध्यस्ततयैव दृश्यमानमुच्यते, स चाध्यास प्रतिबिम्बं विना न घटेत। ज्ञानमात्रस्याध्यासत्वे आत्माश्रयात्, अध्यासाज्ज्ञान ज्ञानमेव चाध्यास इति। तदेतत् स्मर्यतेऽपि—

तस्मिँश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥

(यो वासि उपश ९१।११३) इति।

अत्र हि दृष्टिशब्दो बुद्धिवृत्तिसामान्यपरो युक्तिसाम्यात्। प्रतिबिम्बश्च तत्तदुपाधिषु बिम्बाकारश्चित्तपरिणाम इति। तस्मात् प्रतिबिम्बरूपेण पुरुषे दुःखसम्बन्धो भोगाख्योऽस्ति। अतस्तेनैव रूपेण तन्निवृत्तेः पुरुषार्थत्वं युक्तम्। अत एव 'दुःखं मा भुञ्जीयेति' प्रार्थना ऽप्यापामरं दृश्यते। तच्च दुःखभोगनिवृत्ते पुरुषार्थत्वमन्यशेषतया न सम्भवतीति सैव स्वतः पुरुषार्थः। दुःखनिवृत्तिस्तु कण्टकादिनिवृत्तिवत् तादर्थ्येन न स्वतः पुरुषार्थः। एवं सुखमपि न स्वतः पुरुषार्थः। किन्तु तद्भोग एव स्वतः पुरुषार्थत्वं यातीति।

तदिदं दुःखभोगनिवृत्तेः पुरुषार्थत्वं योगभाष्ये व्यासदेवैरुक्तम्—"तस्मिन् निवृत्ते पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते" (यो. भा. ३।५०) इति। अतः श्रुतावपि दुःखनिवृत्ते पुरुषार्थत्वं विषयतासम्बन्धेनैव बोध्यम्। तदेतद्योगवार्तिके प्रपञ्चितमस्माभिरिति दिक्॥

तदेवमनेन सूत्रेण व्यूहद्वय सङ्क्षेपेणोद्दिष्टम्। विस्तरस्त्वनयो पश्चाद्भवितेति॥ १॥

अतः परं वक्ष्यमाणस्य हानोपायव्यूहस्याकाङ्क्षार्थं तदितरेषां हानोपायत्वं प्रत्याचष्टे सूत्रजातेन —

न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात् ॥२॥

लौकिकादुपायाद्धनादेरत्यन्तदुःखनिवृत्तिसिद्धिर्नास्ति। कुतः? धनादिना दुःखे निवृत्ते पश्चाद्धनादिक्षये पुनरपि दुःखानुवृत्ति

दर्शनादित्यर्थः । तथा च श्रुतिः—"अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन" (बृ. उ. ४।५।३) इत्यादि ॥ २ ॥

नन्वेवं धनाद्यर्जनस्य क्षुद्रदुःखनिवर्तकत्वे कथं तत्र प्रवृत्तिस्तत्राह—

**प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥ ३ ॥**

दृष्टसाधनजन्याया दुःखनिवृत्तेरत्यन्तपुरुषार्थत्वमेव नास्ति । यथाकथञ्चित् पुरुषार्थत्वं त्वस्त्येव । कुतः ? प्रात्यहिकस्य क्षुद्दुःखस्य निराकरणवदेव तेन धनादिना दुःखनिराकरणस्य चेष्टनादन्वेषणादित्यर्थः । अतो धनाद्यर्जने प्रवृत्तिरुपपद्यत इति भावः । क्षुद्रदुःखादिकमप्यापातदुःखनिवर्तकतया मन्दपुरुषार्थो भवत्येवेति ॥ ३ ॥

स च दृष्टसाधनजो मन्दपुरुषार्थो विवेकिहेय इत्याह—

**सर्वासम्भवात् सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः ॥ ४ ॥**

स च दृष्टसाधनजो दुःखप्रतीकारो दुःखादुःखविवेकशास्त्राऽभिज्ञैर्हेयो दुःखपक्षे निक्षेपणीयः । कुतः ? सर्वासम्भवात्—सर्वदुःखेषु दृष्टसाधनैः प्रतीकारासम्भवात् ।

यद्यपि सम्भवस्तत्रापि प्रतिग्रहपापाद्युत्थदुःखाऽऽपादकत्वमाह—सम्भवेऽपीति । सम्भवेऽपि दृष्टोपायनान्तरीयकादिदुःखसम्पर्कावश्यम्भावादित्यर्थः । तथा च योगसूत्रम्—'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुःखं विवेकिनः' (यो. सू. २।१५) इति ॥ ४ ॥

ननु दृष्टसाधनजन्ये सर्वस्मिन्नेव दुःखप्रतीकारे दुःखसम्भेदनियमोऽप्रयोजकः । तथा च स्मर्यते—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम् ॥

(महा. भा. सभाप. नीलकण्ठी ११।४) इति ।

तत्राह—

**उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥**

दृष्टसाधनाऽसाध्यस्य मोक्षस्य दृष्टसाधनसाध्यराज्यादिभ्य उत्कर्षात् तेषु दुःखपक्षताऽवधार्यते । अपिशब्दात् त्रिगुणत्वादेरपि ।

---

१ अहनि अहनि भवस्य ।

मोक्षस्योत्कर्षे प्रमाणं 'सर्वोत्कर्षश्रुते'रिति—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा व सन्तं प्रियाप्रिये [न स्पृशत' ( छां उ ८।१२।१ ) इत्यादिना विदेहकैवल्यस्योत्कर्षश्रुतेरित्यर्थः ॥५॥

ननु मा भवतु दृष्टसाधनादत्यन्तदुःखनिवृत्ति, अदृष्टसाधनात् तु वैदिककर्मणः स्यात्-'अपाम सोममृता अभूम' (ऋ वे ८।४८।३) इत्यादिश्रुतेरिति तत्राह—

अविशेषश्चोभयोः ॥ ६ ॥

उभयोरेव दृष्टादृष्टयोरत्यन्तदुःखनिवृत्त्यसाधकत्वे यथोक्तहेतुत्वे चाऽविशेष एव मन्तव्य इत्यर्थः । एतदेव कारिकायामुक्तम्—

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ॥
( सां का २ ) इति ।

गुरोरनुश्रूयत इत्यनुश्रवो वेद. । तद्विहितयागादिरानुश्रविक । स दृष्टोपायवदेवाऽशुद्ध्या हिंसादिपापेन विनाशि–सातिशयफलकत्वेन च युक्त इत्यर्थः ।

ननु वैधहिंसाया पापजनकत्वे बलवदनिष्टाननुबन्धीष्टसाधनस्वरूपस्य विध्यर्थस्यानुपपत्तिरिति चेत् ? न । वैधहिंसाजन्यानिष्टस्येष्टोत्पत्तिनान्तरीयकत्वेनेष्टोत्पत्तिनान्तरीयक–दुःखाधिकदुःखाऽजनकत्वरूपस्य बलवदनिष्टाननुबन्धित्वस्य विध्यंशस्याऽक्षते' ।

यत्तु वैधहिंसातिरिक्तहिंसाया एव पापजनकत्वमिति, तदसत् । सङ्कोचे प्रमाणाऽभावात् । युधिष्ठिरादीनां स्वधर्मेऽपि युद्धादौ ज्ञातिवधादिप्रत्यवायपरिहाराय प्रायश्चित्तश्रवणाच्च ।

तस्माद्यास्याम्यहं तात ! दृष्ट्वेमं दुःखसन्निधिम् ।
त्रयीधर्ममधर्माढ्यं किम्पाकफलसन्निभम् ॥
( मार्क पु १०/३१ )

इति मार्कण्डेयवचनाच्च । "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य" ( छां उ ८।१५।१ ) इति श्रुतिस्तु वैधातिरिक्तहिंसानिवृत्तेरिष्टसाधनत्वमेव वक्ति, न तु वैधहिंसाया अनिष्टसाधनत्वाभावमपीत्यादिकं योगवार्तिके ( २।३४ ) द्रष्टव्यमिति दिक् ।

"न कर्मणा प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"
( तै आ. १०।१० ) इति ।

'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'
(श्वे उ ३।८, यजु ३१।१८)

इत्यादिश्रुतिविरोधेन तु सोमपानादिभिरमृतत्वं गौणमेव मन्तव्यम्—

'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' ।
(२।८।९०) इति विष्णुपुराणात् ॥ ६ ॥

तदेवं दृष्टाऽदृष्टोपाययोः साक्षात्परमपुरुषार्थाऽसाधनत्वे साधिते तदुपायाकाङ्क्षायां विवेकज्ञानमुपायो वक्तव्यः । तत्र विवेकज्ञानस्य विधेरापवर्गहेतूच्छेदद्वारैव ज्ञानोपाय इत्याद्ययेनाद्यावपि विवेकमेवैतत्प्रतिषेधेन हेयहेतुतया परिशोधयति प्रघट्टकेन—

**न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥ ७ ॥**

दुःखात्यन्तनिवृत्तेर्मोक्षत्वस्योक्ततया बन्धोऽत्र दुःखयोग एव । तस्य बन्धस्य पुरुषे न स्वाभाविकत्वं वक्ष्यमाणलक्षणमस्ति, यतो न स्वभावतो बद्धस्य मोक्षाय साधनोपदेशस्य श्रौतस्य विधेरनुष्ठान नियोज्यता घटते । न ह्यग्नेः स्वाभाविकादौष्ण्यान्मोक्षः सम्भवति, स्वाभाविकस्य यावद्द्रव्यभावित्वादित्यर्थः । तदुक्तमीश्वरगीतायाम्—

'यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः' ॥
'न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि' ॥
(कू पु २।२।१२-१३) इति ।

यस्मिन् सति कारणविलम्बाद् विलम्बो यस्योत्पत्तौ न भवति तस्य तत् स्वाभाविकम्, इति स्वाभाविकत्वलक्षणम् ।

ननु सर्वदोपलम्भप्रसङ्गद्दुःखस्य स्वाभाविकत्वशङ्कैव नास्तीति चेन्न, त्रिगुणात्मकत्वेन चित्तस्य दुःखस्वभावत्वेऽपि सत्त्वाधिक्येनाभिभवात् सदा दुःखानुपलब्धिवदात्मनोऽपि तदनुपलब्धिसम्भवात् । दुःखस्वाभाविकत्ववादिभिर्हि चित्तस्यैवात्मताभ्युपगमाच्च । अथ धर्मधर्म्यभेदादेव मोक्षोऽस्त्विति चेन्न, अहं बद्धो विमुक्तः स्यामिति बन्धसामानाधिकरण्येनैव मोक्षस्य पुरुषार्थत्वादिति ॥ ७ ॥

भवत्वनुष्ठानं तेन किमित्यत आह—

**स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥**

स्वभावस्य यावद्द्रव्यभावित्वान्मोक्षासम्भवेन तत्साधनोपदेशश्रुतेरननुष्ठानलक्षणमप्रामाण्यं स्यादित्यर्थः ॥ ८ ॥

ननु श्रुतिबलादेवानुष्ठानं स्यात्, तत्राह—

**नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥ ९ ॥**

नाऽशक्याय फलायोपदेशस्यानुष्ठानं सम्भवति, यत उपदिष्टेऽपि विहितेऽप्यशक्यस्योपाये स उपदेशो न भवति। किन्तूपदेशाभास एव। 'बाधितमर्थं वेदोऽपि न बोधयतीति' न्यायादित्यर्थः ॥ ९ ॥

अत्र शङ्कते—

**शुक्लपटवद् बीजवच्चेत् ॥ १० ॥**

ननु स्वाभाविकस्याप्यपायो दृश्यते। यथा शुक्लपटस्य स्वाभाविकं शौक्ल्यं रागेणापनीयते। यथा च बीजस्य स्वाभाविक्यप्यङ्कुरशक्तिरग्निनापनीयते। अतः शुक्लपटवद् बीजवच्च स्वाभाविकस्य बन्धस्याप्यपायः पुरुषे सम्भवतीति, तद्वदेव तत्साधनोपदेशः स्यादिति चेदित्यर्थः ॥ १० ॥

समाधत्ते—

**शक्त्युद्भवानुद्भवाभ्यां नाऽशक्योपदेशः ॥ ११ ॥**

उक्तदृष्टान्तयोरपि नाऽशक्याय स्वाभाविकापायायोपदेशो लोकानां भवति। कुतः? शक्त्युद्भवानुद्भवाभ्याम्। दृष्टान्तद्वये हि शौक्ल्यादेराविर्भाव तिरोभावावेव भवतः, न तु शौक्ल्याङ्कुरशक्त्योरभावो भवति। रजकादिव्यापारैर्योगिसङ्कल्पादिभिश्च रक्तपट भृष्टबीजयोः पुनः शौक्ल्याङ्कुरशक्त्याविर्भावादित्यर्थः।

नन्वेवं पुरुषेऽपि दुःखशक्तितिरोभाव एव मोक्षोऽस्त्विति चेन्न, दुःखाऽत्यन्तनिवृत्तेरेव लोके पुरुषार्थत्वानुभवात्, श्रुतिस्मृत्योः पुरुषार्थत्वसिद्धेश्च। न तु दृष्टान्तयोरिव तिरोभावमात्रस्येति। किञ्च दुःखशक्तितिरोभावमात्रस्य मोक्षत्वे कदाचिद्योगीश्वरसङ्कल्पादिना शक्त्युद्भवस्य भृष्टबीजेष्विव मुक्तेष्वपि सम्भवेनाऽनिर्मोक्षापत्तिरिति ॥ ११ ॥

स्वभावतो बन्धं निराकृत्य निमित्तेभ्योऽपि बन्धमपाकरोति सूत्रजातेन (१२-१५)। पुरुषे दुःखस्य नैमित्तिकत्वेऽपि ज्ञानाद्युपायोच्छेद्यत्वं न घटते, अनागतावस्थसूक्ष्मदुःखस्य यावद्द्रव्यभावित्वादित्याशयेन नैमित्तिकत्वं निराक्रियते—

**न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥१२॥**

नापि कालसम्बन्धनिमित्तकः पुरुषस्य बन्धः। कुतः? व्यापिनो

नित्यस्य कालस्य सर्वावच्छेदेन सर्वदा मुक्ताऽमुक्तसकलपुरुषसम्बन्धात् । सर्वावच्छेदेन सदा सकलपुरुषाणां बन्धापत्तेरित्यर्थः ।

अत्र च प्रकरणे कालदेशकर्मादीनां निमित्तत्वसामान्यं नापलप्यते, श्रुतिस्मृतियुक्तिभिः सिद्धत्वात्, किन्तु यन्नैमित्तिकत्वं पाकजरूपादिवन्निमित्तजन्यत्वं तदेव बन्धे प्रतिषिध्यते, पुरुषे बन्धस्यौपाधिकत्वाभ्युपगमात् ।

ननु कालादिनिमित्तत्वेऽपि सहकार्यन्तरसम्भवाऽसम्भवाभ्यां व्यवस्था स्यादिति चेत् ? एवं सति यत्संयोगे सत्यवश्यं बन्धस्तस्यैव सहकारित्वं लाघवाद् बन्धो युक्तः । पुरुषे बन्धस्य सहकारस्यौपाधिकत्वे नाप्युपपत्तेरिति एवं नैमित्तिकत्वेनेति ॥ १२ ॥

न देशयोगतोऽप्यस्मात् ॥ १३ ॥

देशयोगतोऽपि न बन्धः । कुतः ? अस्मात् पूर्वसूत्रोक्तान्मुक्ताऽमुक्तसर्वपुरुषसम्बन्धान्मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥ १३ ॥

नावस्थातो देहधर्मत्वात् तस्याः ॥ १४ ॥

सङ्घातविशेषरूपताख्या देहरूपा याऽवस्था तन्निमित्ततोऽपि न पुरुषस्य बन्धः । कुतः ? तस्या अवस्थाया देहधर्मत्वात्, अचेतनधर्मत्वादित्यर्थः । अन्यधर्मस्य साक्षादन्यबन्धकत्वेऽतिप्रसङ्गान्मुक्तस्यापि बन्धापत्तेरित्यर्थः ॥ १४ ॥

ननु पुरुषस्याप्यवस्थायां किं बाधकं ? तत्राह—

असङ्गोऽयं पुरुष इति ॥ १५ ॥

'इति' शब्दो हेत्वर्थे । पुरुषस्याऽसङ्गत्वादवस्थाया देहमात्रधर्मत्वमिति पूर्वसूत्रेणान्वयः । पुरुषस्याऽवस्थारूपविकारस्वीकारे विकारहेतुसंयोगाख्यसङ्गः प्रसज्येतेति भावः । असङ्गत्वे च श्रुतिः—'स यदत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति, असङ्गो ह्ययं पुरुषः' इति (बृह० उप० ४।३।१६)। सङ्गश्च संयोगमात्रं न भवति, कालदेशसम्बन्धस्य पूर्वमुक्तत्वात् । श्रुतिस्मृतिषु पद्मपत्रस्थजलेनैव पद्मपत्रस्याऽसङ्गतया पुरुषाऽसङ्गतायां दृष्टान्ततयाश्रवणाच्च ॥ १५ ॥

न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥

न हि विहितनिषिद्धकर्मणापि पुरुषस्य बन्धः, कर्मणामनात्मधर्मत्वात् । अन्यधर्मेण साक्षादन्यस्य बन्धे च मुक्तस्यापि बन्धापत्तेः । ननु स्वस्वोपाधिकर्मणा बन्धाङ्गीकारे नायं दोष इत्याशयेन हेत्वन्तरमाह–

अतिप्रसक्तेश्चेति। प्रलयादावपि दुःखयोगरूपबन्धापत्तेश्चेत्यर्थः। सहकार्यन्तरविलम्बतो विलम्बकल्पनं च प्रागेव निराकृतं, 'न कालयोग' (सां सू १।१२) इत्यादिसूत्र इति ॥ १६ ॥

नन्वेवं दुःखयोगरूपोऽपि बन्धः कर्मसामानाधिकरण्यानुरोधेन चित्तस्यैवास्तु, दुःखस्य चित्तधर्मतायाः सिद्धत्वात्, किमर्थं पुरुषस्यापि कल्प्यते बन्ध इत्याशङ्कायामाह—

## विचित्रभोगानुपपत्तिरन्यधर्मत्वे ॥ १७ ॥

दुःखयोगरूपबन्धस्य चित्तमात्रधर्मत्वे विचित्रभोगानुपपत्तिः। पुरुषस्य हि दुःखयोगं विनापि दुःखसाक्षात्काराख्यभोगस्वीकारे सर्वपुरुषदुःखादीनां सर्वपुरुषभोग्यता स्यान्नियामकाभावात्। ततश्चायं दुःखभोक्ताऽयं च सुखभोक्तेत्यादिरूपभोगवैचित्र्यं नोपपद्यतेत्यर्थः।

अतो भोगवैचित्र्योपपत्तये भोगनियामकतया दुःखादियोगरूपो बन्धः पुरुषेऽपि स्वीकार्यः। स च पुरुषे दुःखयोगः प्रतिबिम्बरूप एवेति प्रागेवोक्तम्। प्रतिबिम्बश्च स्वोपाधिवृत्तेरेव भवतीति न सर्वपुंसां सर्वदु:खभोग इति भावः। चित्तवृत्तिरोधे पुरुषस्यानादिः स्वस्वामिभावः सम्बन्धो हेतुरिति योगभाष्यात् (१।४) अयं सिद्धान्तः सिद्धः। चित्ते च पुरुषस्य स्वत्वं स्वभुक्तवृत्तिवासनावत्त्वमिति। यत्तु 'चित्तस्यैव बन्धमोक्षौ, न पुरुषस्येति' श्रुतिस्मृतिषु गीयते, तद् बिम्बरूपदुःखयोगरूपं पारमार्थिकं बन्धमादाय बोध्यम् ॥ १७ ॥

साक्षात् प्रकृतिनिमित्तकत्वमपि बन्धस्यापाकरोति—

## प्रकृतिनिबन्धनाचेत्; न, तस्या अपि पारतन्त्र्यम् ॥१८॥

ननु प्रकृतिनिमित्ताद् बन्धो भवत्विति चेन्न। यतस्तस्या अपि बन्धकत्वे 'संयोगपारतन्त्र्यमुत्तरत्र' (१।१९) वक्ष्यमाणमस्ति। संयोगविशेषं विनापि बन्धकत्वे प्रलयादावपि दुःखबन्धप्रसङ्गादित्यर्थः। प्रकृतिनिबन्धना चेदिति पाठे तु प्रकृतिनिबन्धना चेद् बन्धनेत्यर्थः ॥ १८ ॥

अतो यत्परतन्त्रा प्रकृतिर्बन्धकारणं सम्भवेत् तस्मादेव संयोगविशेषादौपाधिको बन्धोऽग्निसंयोगाज्जलौष्ण्यवदिति स्वसिद्धान्तमनेनैव प्रसङ्गेनान्तराल एवावधारयति—

## न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योग-स्तद्योगादृते ॥ १९ ॥

तस्मात् तद्योगादृते प्रकृतिसंयोगं विना न पुरुषस्य तद्योगो बन्धः

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥
इति ( स का. १० )।

यथैकत्वं सर्गभेदेऽप्यभिन्नत्वम् । अतः प्रकृतेरनेकव्यक्तित्वेऽपि नैकत्वश्रुतिः ॥

महान्तं च समावृत्य प्रधानं समवस्थितम् ।
अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते ॥
( वि पु २।७।२५ )

इति विष्णुपुराणेनासंख्येयतावचनात् तु प्रधानस्य व्यक्तिबहुत्व सिद्धरिति ॥ १२६ ॥

प्रधानाख्यानां जगत्कारणगुणानामन्योऽन्यविवेकाय तेषामवान्तरमपि वैधर्म्यं सिद्धान्तयति, विविधजगत्कारणत्वोपपत्तये च, ॥ ॥ रूपात् कारणाद्विचित्रकार्याणि सम्भवन्तीति—

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ॥१२७॥

गुणानां सत्त्वादिद्रव्यत्रयाणामन्योऽन्यं सुखदुःखाद्यैर्वैधर्म्यं, कार्येषु तद्दर्शनादित्यर्थः । सुखादिकं च घटादेरपि रूपादिवदेव धर्मोऽस्ति करणोपादानत्वात् 'अन्यधर्मत्वाणाम्' इत्युक्तम् । अत्रादिशब्दग्राह्याः पञ्चशिखाचार्यैरुक्ताः । यथा सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदं समासतः सुखात्मकम् । एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम् । एवं तमोऽपि निद्रादिनाभेदं समासतो मोहात्मकमिति ।

अत्र प्रीत्यादीनां गुणधर्मत्ववचनादागामिसूत्रे च लघुत्वादेर्धर्मत्वमाणत्वात् सत्त्वादीनां द्रव्यत्वं सिद्धम् । सुखाद्यात्मकता तु गुणानां मनसः सङ्कल्पात्मकतावद्धर्मधर्म्यभेदाद्वेवोपपद्यते । न वैशेषिकोक्ताः सुखादय एव सत्त्वादिगुणा इति । सत्त्वादित्रयमपि व्यक्तिभेदादनन्तम् । अन्यथा हि विभुमात्रत्वे गुणविमर्दवैचित्र्यात् कार्यवैचित्र्यमिति सिद्धान्तो नोपपद्येत । विमर्दस्यानवयवेष्वसम्भवात् ॥ १२७ ॥

गुणानां सत्त्वादीनामेकैकव्यक्तिमात्रत्वे वृद्धिह्रासादिकं नोपपद्यते । तथा परिच्छिन्नत्वं च तत्समूहरूपस्य प्रधानस्य परिच्छिन्नत्वापत्त्या श्रुतिस्मृतिसिद्धमनन्तत्वाऽसङ्ख्यत्वप्रमाणत्वादिकं नोपपद्येत । अतोऽसङ्ख्याते

गुणानां त्रित्वसङ्ख्योपपादनाय विवेकार्थं च तेषां साधर्म्यवैधर्म्ये प्रतिपादयति—

लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम् ॥ १२८ ॥

अयमर्थः । लघ्वादीति भावप्रधानो निर्देशः । लघुत्वादिधर्मेण सर्वासां सत्त्वव्यक्तीनां साधर्म्यं वैधर्म्यं च रजस्तमोभ्याम् । तथा च पृथिवीव्यक्तीनां पृथिवीत्वेनेव सत्त्वव्यक्तीनामेकजातीयतयैकता सजातीयोपष्टम्भादिना वृद्धिह्रासादिकं च युक्तमित्याशयः । एवं चञ्चलत्वादिधर्मेण सत्त्वादिरजोव्यक्तीनां साधर्म्यं सत्त्वतमोभ्यां च वैधर्म्यम् । शेषं पूर्ववत् । एवं गुरुत्वादिधर्मेण सर्वासां तमोव्यक्तीनां साधर्म्यं सत्त्वरजोभ्यां वैधर्म्यम् । शेषं पूर्ववदिति ।

वैधर्म्यस्य प्रागेवोक्ततयात्र पुनर्वैधर्म्यकथनं सम्पातायातम् । अत्र वैधर्म्यं चेति पाठः प्रामादिक एवेति ।

अत्र सूत्रे सत्त्वादीनां कारणद्रव्याणां प्रत्येकमनेकव्यक्तिकत्वं सिद्धम् । अन्यथा लघुत्वादीनां साधर्म्यत्वानुपपत्तेः, समानानां धर्मस्यैव साधर्म्यत्वात् । न च कार्यसत्त्वादीनामनेकतया लघुत्वादिकं साधर्म्यं स्यादिति वाच्यम् । त्रिगुणात्मकत्वेन घटादीनामपि कार्यसत्त्वादिरूपतया लघुत्वादीनां सत्त्वादिसाधर्म्यत्वानुपपत्तेः । तस्मात् कारणगुणानामेवात्र साधर्म्यादिकमुच्यत इति । सत्त्वादीनां लघुत्वादिकं चोक्तं कारिकया—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥

( सा का १३ ) इति ॥

अर्थत —पुरुषार्थनिमित्तात् । नन्वेवं मूलकारणस्य परिच्छिन्नापरिच्छिन्नासङ्ख्यव्यक्तिकत्वे वैशेषिकमतादत्र को विशेष इति चेत्, कारणद्रव्यस्य शब्दस्पर्शादिराहित्यमेव ॥

शब्दस्पर्शविहीनं तु रूपादिभिरसंयुतम् ।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् ॥

( वि पु १।२।२० )

इति विष्णुपुराणादिभ्यः । एतच्च पातञ्जलेऽस्माभिः प्रपञ्चितम् (यो. वार्ति. ३।१८-१९) ॥ १२८ ॥

ननु महदादीनां स्वरूपत सिद्धावपि तेषां प्रत्यक्षेणोत्पत्त्यदर्शनात् कार्यत्वे नास्ति प्रमाण येन तेषां हेतुमत्त्व साधर्म्य स्यात्, तत्राह—

उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥ १२९ ॥

महदादिपञ्चभूतान्तं विवादास्पदं तावन्न पुरुषो, भोग्यत्वात्। नापि प्रकृतिः मोक्षान्यथानुपपत्त्या विनाशित्वात्। अत प्रकृतिपुरुषभिन्नं तत्; भिन्नत्वाच्च कार्यं घटादिवदित्यर्थ ॥ १२९ ॥

ननु विकारत्वानित्यत्वादिनैव मोक्षाद्युपपत्तेर्विनाशित्वमपि तेषाम सिद्धमित्याशङ्कायां कार्यत्वे हेत्वन्तराण्याह—

परिमाणात् ॥ १३० ॥

परिच्छिन्नत्वाद् देशिकाभावप्रतियोगितावच्छेदकजातिमत्त्वादित्यर्थ । तेन गुणव्यक्तीनां कियतीनां परिच्छिन्नत्वेऽपि न तत्र व्यभिचार॰ ॥ १३० ॥

किञ्च—

समन्वयात् ॥ १३१ ॥

उपवासादिना क्षीणं हि बुद्ध्यादितत्त्वमन्नादिभि समन्वयेन समनुगतेन पुनरुपचीयते। अत॰ समन्वयात् कार्यत्वमनुमीयत इत्यर्थ॰। नित्यस्य हि निरवयवतयाऽवयवानुप्रवेशरूप समन्वयो न घटत इति। समन्वये च श्रुति प्रमाणम् मन प्रकृत्य—'एवं ते सौम्य षोडशानां कलानामेका कलाऽतिशिष्टाभूत्। साऽन्नेनोपसमाहिता प्राज्वालीत्' (छा उ ६।७।६) इति। योगसूत्रं च—'जात्यन्तरपरिणाम प्रकृत्यापूरात्' (४।२ सू ) इति ॥ १३१ ॥

किञ्च—

शक्तितश्चेति ॥ १३२ ॥

करणत्वेत्यर्थ । पुरुषस्य यत् करणं तत् कार्यं चक्षुरादिवदिति भाव । पुरुषे साक्षाद्विषयार्पकत्वं महतेनौस्तीति प्रकृतिर्न करणमिति। अतो महत्तत्त्वस्य करणतया कार्यत्वे सिद्धे सुतरामन्येषामपि कार्यत्वम्। इतिशब्दश्च हेतुवर्गसमाप्तिसूचनार्थ ॥ १३२ ॥

यदि च महदादिमध्ये किञ्चित्कार्यं स्वीक्रियते तदापि तद्वत् प्रकृति पुरुषो चेति सिद्ध न समीहितम्। प्रकृतेरुक्तो प्रमाणपरे

णामित्वापरिणामित्वाभ्यां विवेकव्याविभत्यवेवास्माकं तात्पर्या-
दित्याह—

तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥

तद्धाने कार्यत्वहाने यदि परिणामी तदा प्रकृति । यदि वा अपरि-
णामी मोक्ता तदा पुरुष इत्यर्थ ॥ १३३ ॥

ननु नित्यमप्युभयभिन्नं स्यात्, तत्राह—

तयोरन्यत्वे तुच्छत्वम् ॥ १३४ ॥

अकार्यस्य प्रकृतिपुरुषभिन्नत्वे तुच्छत्वं शशशृङ्गादिवत् प्रमाणा-
भावात् । अकार्यं हि कारणतया वा मोक्तृतया वा सिद्ध्यति, नान्यथे-
त्यर्थ ॥ १३४ ॥

तदेवं महदादिषु कार्यत्वं प्रसाध्य साम्प्रतं तै. प्रकृत्यनुमानेऽनुक्त
विशेषमाह—

कार्यात् कारणानुमानं तत्साहित्यात् ॥ १३५ ॥

कार्यान्महत्तत्त्वादेर्लिङ्गात् सामान्यतो दृष्टं कारणानुमान यदुक्तं
तत् ताटस्थ्यनिवृत्तये तत्साहित्यात् कार्यसाहित्येनैव कर्त्तव्यम्।
"सदेव सौम्येदमग्र आसीत्" ( छां उ ६।२।१ ), "तम एवेदमग्र
आसीत्" ( मै आ ५।२ ) इत्यादि श्रुत्यनुसारात् । तद्यथा—महदादिकं
स्वोपहितत्रिगुणात्मकवस्तूपादानकं कार्यत्वात्, शिलामध्यस्थ-
प्रतिमावत्, तैलादिवच्चेत्यर्थ । अत्रानुकूलतर्कः प्रागेव ( १।६१–६५
भा ) दर्शित ॥ १३५ ॥

तस्याः प्रकृते. कार्याद्वैधर्म्यं विवेकार्थमाह—

अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥

अभिव्यक्तात् त्रिगुणान्महत्तत्त्वादपि मूलकारणमव्यक्तं सूक्ष्मम् ।
महत्तत्त्वस्य हि सुखादिर्गुण साक्षात् क्रियते, प्रकृतेश्च गुणोऽपि न
साक्षात्क्रियत इति प्रधानम् परमाव्यक्तम् । महत्तत्त्वं तु तदपेक्षया
व्यक्तमित्यर्थ ॥ १३६ ॥

ननु परमसूक्ष्मं चेत् तर्हि तस्यापलाप एवोचित इत्याकाङ्क्षायां
पूर्वोक्तं स्मारयति—

तत्कार्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥

सुगमम् ॥ १३७ ॥

प्रकृत्यनुमानगता विशेषा विस्तरतो विचारिताः। इत परमध्याय-समाप्तिपर्यन्तं पुरुषानुमानगता विशेषा विचार्या। तत्र पञ्चनादौ विशेषमाह—

## सामान्येन विवादाभावाद्धर्मवन्न साधनम् ॥ १३८ ॥

यत्र वस्तुनि सामान्यतो विवादो नास्ति न तस्य स्वरूपतः साधन-मपेक्ष्यते, धर्मस्येवेत्यर्थः। अयं भावः—यथा प्रकृतेः सामान्येनापि साधनमपेक्षितं, धर्मिण्यपि विवादात्। नैवं पुरुषस्य साधनमपेक्षि-तम्, चेतनापलापे जगदान्ध्यप्रसङ्गतो भोक्तर्यहम्पदार्थे सामान्यतो बौद्धानामप्यविवादात् धर्म इव। धर्मो हि सामान्यतो बौद्धैरपि स्वी-क्रियते ततशिलारोहणादिषु धर्मत्वाभ्युपगमात्। अतः पुरुषे विवेक-नित्यत्वादिसाधनमात्रमनुमानं कार्यमिति ॥ १३८ ॥

'संहतपरार्थत्वात् पुरुषस्य' (१।६६) इत्युक्तसूत्रेणापि विवे-कानुमानमेवाऽभिप्रेतम्, न तु तत्र पुरुषस्य सर्वथैवासत्त्वमभि-प्रेतमिति। तत्र वादौ विवेकमनिमासूत्रम्—

## शरीरादिव्यतिरिक्तः पुमान् ॥ १३९ ॥

शरीरादिप्रकृत्यन्तं यच्चतुर्विंशतितत्त्वात्मकं वस्तु ततोऽतिरिक्तः पुमान् भोक्तेत्यर्थः। भोक्तृत्व च द्रष्टृत्वमिति ॥ १३९ ॥

अत्र हेतूनाह सूत्रैः—

## संहतपरार्थत्वात् ॥ १४० ॥

यत सर्वं संहतं प्रकृत्यादिकं परार्थं भवति शय्यादिवत्। अतोऽ संहतः संहतदेहादिभ्यः परः पुरुषः सिद्ध्यतीत्यर्थः। अयं च हेतुः संहतपरार्थत्वात् पुरुषस्येत्यत्र (१।६६) व्याख्यातः। उक्तस्यापि हेतोः पुनरभ्यासो हेतुवर्गसङ्कलनार्थः ॥ १४० ॥

किञ्च—

## त्रिगुणादिविपर्ययात् ॥ १४१ ॥

सुखदुःखमोहात्मकत्वादिविपरीतत्वादित्यर्थः। शरीरादीनां हि यः सुखाद्यात्मकत्वं धर्मः, स सुखादिभोक्तरि न सम्भवति, स्वयं सुखादि-मदने कर्मकर्तृविरोधात्, धर्मिणुक्तत्वेन सुखाद्युभवादित्यर्थः।

ननु बुद्धिवृत्तिप्रतिबिम्बितं स्वसुखादिकं पुरुषेण गृह्यतां स्ववदिति चेन्न। एवं सति बुद्धेरेव सुखादिकल्पनौचित्यात्। पुरुषगतसुखादेर्बुद्धौ प्रतिबिम्बकल्पने गौरवात्। अहं-सुखी, दुःखी, मूढः इत्यादिप्रत्यास्तु न पुरुषे सुखादिसाधकाः, तत्स्वामित्वेनाप्युपपत्तेश्च। बुद्धेः सुखादिमत्त्वेनाप्युपपत्तेश्च। लौकिक्या ह्यहंबुद्ध्यावश्यं बुद्धिरपि विषयो मिथ्याज्ञानवासनादिरूपदोषानुवृत्तेस्तत्प्रतिबिम्बकल्पनायां च गौरवादिति।

आदिशब्देन चात्र 'त्रिगुणमविवेकि विषयः' (सा. का. ११) इति कारिकोक्ताऽविवेकित्वादयो ग्राह्याः। तथा रूपादयः शरीरादिधर्मा ग्राह्याः ॥ १४१ ॥

किञ्च—

## अधिष्ठानाच्चेति ॥ १४२ ॥

भोक्तुरधिष्ठातृत्वादधिष्ठेयेभ्यः प्रकृत्यन्तेभ्योऽतिरिक्ततेत्यर्थः। अधिष्ठानं हि भोक्तुः संयोगः। स च प्रकृत्यादीनां भोगहेतुपरिणामेषु कारणम्। भोक्तुरधिष्ठानाद् भोगायतननिर्माणमिति (५।११४) वक्ष्यमाणसूत्रात्। संयोगश्च भेदे सत्येव भवतीति भावः। इति शब्दो हेतुसमाप्तौ ॥ १४२ ॥

उक्तानुमानेऽनुकूलतर्कं प्रदर्शयति सूत्राभ्याम्—

## भोक्तृभावात् ॥ १४३ ॥

यदि हि शरीरादिस्वरूप एव भोक्ता स्यात् तदा भोक्तृत्वमेव व्याहन्येत, कर्मकर्तृविरोधात्। स्वस्य साक्षात् स्वभोक्तृत्वानुपपत्तेरित्यर्थः। अनुपपत्तिश्च पूर्वमेव (१।९९ भा.) व्याख्याता। अत्र सूत्रे पुरुषस्य भोगः स्वीकृत इति स्मर्तव्यम्। अपरिणामिनश्च पुरुषस्य भोगः, 'चिदवसानो भोगः' (१।१०४) इत्यत्र व्याख्यातः ॥ १४३॥

किञ्च—

## कैवल्यार्थं प्रवृत्तेश्च ॥ १४४ ॥

शरीरादिकमेव चेद्भोक्तृ स्यात् तदा भोक्तृ कैवल्यार्थं दुःखात्यन्तोच्छेदार्थं कस्यापि प्रवृत्तिर्नोपपद्येत। शरीरादीनां विनाशित्वात् प्रकृतेश्च धर्मिग्राहकमानेन दुःखस्वाभाव्यसिद्ध्या कैवल्याऽसम्भवात्।

न हि स्वभावस्यात्यन्तोच्छेदो घटत इत्यर्थः । अत्र कैवल्यार्थं प्रवृत्तेरिति सूत्रपाठः प्रामादिकत्वादुपेक्षणीयः ॥

> सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
> पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥
>
> (सां० का० १७)

इति कारिकायां कैवल्यार्थं प्रवृत्तेश्चेति पाठात्, अर्थासङ्गतेश्चेति ॥ १४४ ॥

चतुर्विंशतितत्त्वातिरिक्ततया पुरुषः साधितः, इदानीं पुरुषगतो विशेषो विवेकस्फुटीकरणायानुमीयते—

**जडप्रकाशायोगात् प्रकाशः ॥ १४५ ॥**

वैशेषिका आहुः—प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज्ज्ञानाख्यः प्रकाशो जायत इति । तन्न । लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन तदयोगात् । अतः सूर्यादिवत् प्रकाशस्वरूप एव पुरुष इत्यर्थः । तथा च स्मृतिः—

> यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते ।
> तद्वदैक्यं न सम्बद्धं प्रपञ्चपरमात्मनोः ॥
>
> (कू० पु० अ०१० इति)
>
> यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
> ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु ॥
>
> (कू० पु० अ०११)

प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिरनुगतव्यवहारादिति ॥ १४५ ॥

ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति, न वा ? तत्राह—

**निर्गुणत्वान्न चिद्धर्मा ॥ १४६ ॥**

सुगमम् । पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्सम्बन्धमात्रेणान्यव्यवहारोपपत्तौ प्रकाशात्मकधर्मकल्पनागौरवमित्यपि बोद्धव्यम् । तेजसश्च प्रकाशाख्यरूपविशेषाग्रहेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाशतेजसोर्भेदः सिध्यति । आत्मनस्तु ज्ञानाख्यप्रकाशाग्रहकाले ग्रहणं

नाम्नीयतो लाघवाद्धर्मधर्मिभावशून्यं प्रकाशरूपमेवाऽऽत्मद्रव्यं कल्प्यते। तस्य च न गुणत्वम् संयोगादिमत्त्वात्, अनाश्रितत्वाच्चेति। तथाच स्मर्यते—

> ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन।
> ज्ञानस्वरूप एवात्मा नित्यः पूर्णः सदा शिवः॥

(सौ पु ११।२६ इति)

ननु निर्गुणत्वे एव का युक्तिरिति चेत्। उच्यते। पुरुषस्येच्छा-द्यास्तावन्नित्या न सम्भवन्ति, जन्यताप्रत्यक्षात्। जन्यगुणाङ्गीकारे परिणामित्वापत्तिः। तथा चोभयोरेव प्रकृतिपुरुषयोः परिणामहेतुत्व-कल्पने गौरवम्। आत्मपरिणामेन कदाचिदज्ञत्वस्याप्यापत्त्या ज्ञानेच्छा-दिगोचरसंशयापत्तिश्च। तथा जडप्रकाशायोगस्योक्तत्वादपि न नित्य-स्यानित्यज्ञानसम्भव इति। इच्छादिकमन्वयव्यतिरेकाभ्यां मनस्येव लाघवात् सिद्ध्यति। मनःसंयोगस्यात्ममनसोभयोस्तद्धेतुत्वे गौरवात्। गुणशब्दश्च विशेषगुणवाचीत्युक्तमेव। अत आत्मा निर्गुणः।

अपि च ये तार्किका आत्मनः कर्तृत्वमिच्छन्ति तेषां मोक्षानुपपत्तिः, अहं कर्तेति बुद्धेरेव गीतादिष्वदृष्टोत्पत्तिहेतुतयोक्तत्वात्। तस्याश्च तन्मते मिथ्याज्ञानत्वाभावेन तत्त्वज्ञाननिवर्त्यत्वासम्भवात्। अतः श्रुत्युक्तमोक्षानुपपत्त्याऽऽत्मनोऽकर्तृत्वमस्माभिरिष्यते। अकर्तृत्वाच्चादृष्ट-सुखाद्यभावः। ततश्च मनसः कृत्यादिहेतुत्वे कल्पनीये लाघवादन्त-रङ्गगुणत्वावच्छेदेनैतत् कल्प्यते। अत आत्मा निर्गुण इति। यथो-क्तस्य च परमसूक्ष्मस्यात्मनः स्वरूपं वाशिष्ठे करामलकवत् प्रोक्तं विविच्य प्रतिपादितम्।

यथा—

> असम्भवति सर्वत्र दिग्भूम्याकाशरूपिणि।
> प्रकाश्ये यादृशं रूपं प्रकाशस्यामलं भवेत्॥
> त्रिजगत् त्वमहं चेति दृश्ये सत्तामुपागते।
> द्रष्टुः स्यात् केवलीभावस्तादृशो विमलात्मनः॥

(यो वा ३।४।५५-५६) इति॥१४६॥

नन्वहं जानामीति धर्मधर्मिभावानुभवात् पुरुषस्य चिद्धर्मकत्वं सिद्ध्यति, गौरवस्य प्रामाणिकत्वेनाऽदोषत्वादिति। तत्राह—

## श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥ १४७ ॥

भवेदेवं यदि केवलतर्केणास्माभिर्निर्गुणत्वाद्यिकं प्रसाध्यते, किन्तु श्रुत्यापि । अतः श्रुत्या सिद्धस्य निर्गुणत्वादेर्नापलापः सम्भवति, तत्प्रत्यक्षस्य गुणादिप्रत्यक्षस्य श्रुत्यैव बाधात् । अहं गौर इत्यादिप्रत्यक्षवदित्यर्थः । अन्यथा हि गौरोऽहमिति प्रत्यक्षबलेन देहातिरिक्तात्मसाधिका अपि युक्तयो बाधिताः स्युरिति जितं नास्तिकैः ।

निर्गुणत्वे च श्रुतयः—"साक्षी चेता केवलो निर्गुणश्च" ( श्वेता० उ० ६।११) इत्याद्याः । चिन्मात्रत्वे तु श्रुतयः—"अकर्ता चेतनश्चिन्मात्रः सच्चिदेकरसो ह्ययमात्मा" इत्याद्याः इति सर्वज्ञत्वादिश्रुतयस्तु राहोः शिर इतिवल्लौकिकविकल्पानुवादमात्राः । विधिनिषेधश्रुतिमध्ये निषेधश्रुतेरेव बलवत्त्वात्—अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति इति (बृ० उ० २।३।६) श्रुतेः ।

किञ्चाज्ञानामहं जानामीति प्रत्यये प्रमात्वकल्पनायामेव गौरवम् । अनाद्यविद्यादोषस्यानुवर्तमानतया भ्रमत्वस्यैवौत्सर्गिकत्वात् । अतो भ्रमज्ञानानन्तपाक्षिकत्वेनाप्रामाण्यशङ्कास्कन्दितत्वात्प्रत्यक्षबाधने लाघवतर्काद्यनुगृहीतमनुमानमपि समर्थमिति ॥

नन्वात्मनो नित्यज्ञानस्वरूपत्वे कीदृशं लाघवमिति चेत् । उच्यते । नैयायिकादिभिरन्तःकरणं व्यवसायानुव्यवसायौ तदाश्रयश्चेति चत्वारः पदार्थाः कल्प्यन्ते । अस्माभिस्त्वन्तःकरणं व्यवसायस्थानीयास्तद्वृत्तयस्तदनन्तानुव्यवसायस्थानीयश्च नित्यज्ञानरूप आत्मेति त्रयः पदार्थाः कल्प्यन्त इति ॥ १४७ ॥

ननु यदि प्रकाशरूप एवात्मा तदा सुषुप्त्याद्यवस्थाभेदो नोपपद्यते, सदा प्रकाशमानत्वादिति । तत्राह—

## सुषुप्त्याद्यसाक्षित्वम् ॥ १४८ ॥

सुषुप्त्याद्यवस्थात्रयस्य बुद्धिनिष्ठस्य साक्षित्वमेव पुंसीत्यर्थः । तदुक्तम्—

जाग्रत् स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ॥
( भाग० ११।१३।२७ ) इति

तासां बुद्धिवृत्तीनां साक्षित्वेन तद्विलक्षणो जाग्रदाद्यवस्थारहितो निर्णीत इत्यर्थः।

तत्र जाग्रज्जाग्रदवस्थेन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः। स्वप्नावस्था च संस्कारमात्रजन्यस्तादृशः परिणामः। सुषुप्त्यवस्था च द्विविधार्द्धसमग्रलयभेदेन। तत्रार्द्धलये विषयाकारा वृत्तिर्न भवति-किन्तु स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति। अन्यथोत्थितस्य सुखमहमस्वाप्समित्यादिरूपसुषुप्तिकालीनसुखादिस्मरणानुपपत्तेः। तदुक्तं व्याससूत्रेण-'मुग्धेऽर्द्धसम्पत्तिः परिशेषात्' (ब्र सू ३।२।१०) इति।

समग्रलये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति। अन्यथा 'समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता' (सां सू ५।११६) इत्यागामिसूत्रानुपपत्तेरिति। सा च समग्रसुषुप्तिर्वृत्त्यभावरूपेति पुरुषस्तत्साक्षी न भवति, पुरुषस्य वृत्तिमात्रसाक्षित्वात्। अन्यथा संस्कारादेरपि बुद्धिधर्मस्य साक्षिभास्यतापत्तेः। सुषुप्त्यादिसाक्षित्वं तु तादृशबुद्धिवृत्तीनां स्वप्रतिबिम्बितानां प्रकाशनमिति वक्ष्यामः (सां सू १।१६१)। अतो ज्ञानार्थं पुरुषस्य न परिणामापेक्षेति।

स्यादेतत्। सुषुप्ते यदि सुखदुःखादिगोचरा बुद्धिवृत्तिरिष्यते, तर्हि जाग्रदाद्यवस्थाविलक्षणानां वृत्तिग्राह्यत्वस्वीकार एव युक्त इति व्यर्था तत्साक्षिपुरुषकल्पना। स्वगोचरवृत्तत्वेनैव स्वव्यवहारहेतुतायाः सामान्यतः सुवचत्वादिति।

नैवम्। नियमेन स्वगोचरवृत्तिकल्पनेऽनवस्थापत्तिर्गौरवं च स्यात्। किञ्चाहं सुखीत्यादिवृत्तिषु सुखादीनां विशेषणतया निर्विकल्पकं तज्ज्ञानमादायपेक्ष्यते। तत्र चानन्तनिर्विकल्पकवृत्त्यपेक्षया लाघवेन नित्यमेकमेवात्मस्वरूपं ज्ञानं कल्प्यते। अहं सुखीत्यादिविशिष्टज्ञानार्थं बुद्धिवृत्तेरेव तादृशाकारत्वं पुरुषे वृत्तिसारूप्यमात्रस्वीकारेण वृत्त्याकारातिरिक्ताकारानभ्युपगमात् स्वतन्त्राकारेण परिणामापत्तेरिति॥१४८॥

अथैवं पुरुषस्य सुषुप्त्यादिसाक्षिमात्रत्वेन पुरुषैक्यस्याप्युपपत्तौ स किमेकोऽनेको वेति संशय तत्रायं पूर्वपक्ष-लाघवतर्कसहकारेण वक्ष्यमाणश्रुतिभ्योऽभेदश्रुतिभ्य एक एवात्मा सिद्ध्यति। जाग्रदाद्यवस्थारूपाणां वैधर्म्याणां बुद्धिधर्मत्वात्। यद्यप्येकस्यात्मनः सर्वबुद्धिसाक्षित्वं तथाऽपि यस्या बुद्धेर्या वृत्तिः सैव बुद्धिस्तद्वृत्तिविशिष्टतया साक्षिणं गृह्णाति, घटं जानामीत्यादिरूपैः। अत एकस्या बुद्धेरयं घट इति वृत्तौ सत्यामन्यबुद्धिवृत्तिद्वारा नानुभवो, घटमहं जानामीति॥

तत्र सिद्धान्तमाह—

जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥ १४९ ॥

"पुण्यवान् स्वर्गे जायते, पापी नरके, अज्ञो बध्यते, ज्ञानी मुच्यते" इत्यादि श्रुतिस्मृतिव्यवस्थाया विभागस्यान्यथानुपपत्त्या पुरुषा बहव इत्यर्थः । जन्ममरणे चात्र नोत्पत्तिविनाशौ, पुरुषनिष्ठत्वाभावात् । किन्त्वपूर्वदेहेन्द्रियादिसङ्घातविशेषेण संयोगश्च वियोगश्च भोगतदभावनियामकाविति । जन्मादिव्यवस्थायां च श्रुतिः —

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते । जहात्येनां भुक्तभोगामजोऽन्यः ॥

(श्वेता उ ४।५)

ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति (बृ उ ४।४।१४, श्वेता उ ३।१०) इत्यादिरिति ॥ १४९ ॥

ननु पुरुषैक्येऽप्युपाधिरूपावच्छेदकभेदेन जन्मादिव्यवस्था भवेत्, तत्राह—

उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः ॥ १५० ॥

उपाधिभेदेऽप्येकस्यैव पुरुषस्य नानोपाधियोगोऽस्त्येव । यथैकस्यैवाकाशस्य घटकुड्यादिनानायोगः । अतोऽवच्छेदकभेदेनैकस्यैवात्मन एव विविधजन्ममरणाद्यापत्तिः कायव्यूहादाविवेति न तन्नियामिका व्यवस्था, एकः पुरुषो जायते नापर इत्यादिरित्यर्थः । न ह्यवच्छेदकभेदेन कपिसंयोगतदभाववत्येकस्मिन्नेव वृक्षे व्यवस्था घटते । एको वृक्षः कपिसंयोगी, अन्यश्च नेति ।

किञ्चैवमौपाधिके मुक्तस्याप्यात्मप्रदेशस्योपाध्यन्तरैः पुनर्बन्धापत्त्या बन्धमोक्षाव्यवस्था तदवस्थैव । यथैकघटमुक्तस्याकाशप्रदेशस्यान्यघटयोगात् घटाकाशव्यवस्था तद्वदिति । न च बन्धमोक्षव्यवस्था श्रुतिरपि लौकिकभ्रमानुवादमात्रमिति वाच्यम् । मोक्षस्याऽलौकिकत्वात् । मिथ्यापुरुषार्थप्रतिपादनेन श्रुतेः प्रतारकत्वापत्तेश्च ॥१५०॥

ननु चैतन्यैक्येऽपि तत्तदुपाधिविशिष्टस्यातिरिक्ततामभ्युपगम्य व्यवस्थोपपादनीया, तत्राह—

## उपाधिर्भिद्यते न तु तद्वान् ॥ १५१ ॥

उपाधिरेव नाना, न तु तद्वानुपाधिविशिष्टोऽपि नानाभ्युपेयो विशिष्टस्यातिरिक्तत्वे नानात्मनाया एव शास्त्रान्तरेऽप्यभ्युपगमापत्तेरित्यर्थः बन्धभागिनो विशिष्टत्वे विशेषणवियोगेन विशिष्टनाशान्न मोक्षोपपत्तिरित्यादीन्यपि दूषणानि।

ननु विशिष्टस्य जीवत्वमन्वयव्यतिरेकादिति षष्ठाध्याये स्वयमेवाहङ्कारविशिष्टस्यैव जीवत्वं वक्ष्यतीति चेन्न। प्राणधारकत्वरूपजीवत्वस्यैव विशिष्टधर्मत्ववचनात्। न तु बन्धमोक्षव्यवस्थाया विशिष्टाश्रितत्वं वक्ष्यते, मोक्षकाले विशिष्टाभावादिति ॥

यदपि केचिन्नवीना वेदान्तिब्रुवा आहुः। एकस्यैवात्मनः कार्यकारणोपाधिषु प्रतिबिम्बानि जीवेश्वराः, प्रतिबिम्बानां चान्योऽन्यं भेदाद्व न्धमोक्षव्यवस्थोपपत्तिरिति।

तदप्यसत्। भेदाभेदविकल्पासहत्वात्। बिम्बप्रतिबिम्बयोर्भेदे प्रतिबिम्बस्याऽचेतनतया मोक्तृत्वबन्धमोक्षाद्यनुपपत्तिः। जीवब्रह्माभेदरूपस्वसिद्धान्तक्षतिश्च। जीवेश्वरभिन्नस्यात्मनोऽप्रामाणिकत्वं च। अभेदे तु साङ्कर्यापरिहारः। भेदाभेदाभ्युपगमे तु स्वसिद्धान्तहानिः, भेदाभेदविरोधश्च।

अस्मन्मते स्वभेदोऽविभागलक्षणो भेदश्चान्योन्याभाव इत्यविरोध इति। अवच्छेदप्रतिबिम्बादिदृष्टान्तवाक्यानि त्वग्रे व्याख्यास्यामः (सां. सू. ६।१५३-१५४)।

स्यादेतत् बिम्बप्रतिबिम्बादिभेदं परिकल्प्य श्रुत्या बन्धमोक्षव्यवस्था कल्पितेत्येवास्माभिरुच्यते, न तु परमार्थतो बिम्बप्रतिबिम्बभावस्तयोर्भेदो बन्धमोक्षादिकं चेष्यत इति।

मैवम्। एवं सति बन्धमोक्षादिश्रुतिगणस्य भेदश्रुतिगणस्य चोभयोर्बाधापेक्षया केवलाभेदश्रुतिगणस्यैवाविभागपरतयैव सङ्कोचो लाघवायुक्तः। श्रुतिस्मृत्यन्तरैरविभागस्य सिद्धत्वाच्चेति ॥ १५१ ॥

आत्मैक्यवादिप्रयुक्तं दूषणमुपसंहरति—

## एवमेकत्वेन परिवर्त्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ ॥

एव रीत्यैकत्वेन सर्वतो वर्तमानस्याऽऽत्मनो जन्ममरणादिरूपविरुद्धधर्मप्रसङ्गो न युक्त इत्यर्थः। यद्वैकत्व इति छेदः। एकत्वेऽभ्यु-

पगम्यमाने परितः सर्वतो वर्तमानस्य सर्वोपाध्यनुगतस्य विरुद्धधर्माध्यासो नेति, न, किन्तु सर्वथा विरुद्धधर्मसङ्करोऽपरिहार्य इत्यर्थः।

ननु पुरुषो निर्धर्मकः, तत्र कथं जन्ममरणबन्धमोक्षादिविरुद्धधर्मसाङ्कर्यमापद्यते, भवद्भिरपि सर्वेषां धर्माणामुपाधिनिष्ठत्वाऽभ्युपगमादिति चेन्न। उक्तधर्माणां संयोगवियोगभोगाभोगरूपतया पुरुषे स्वीकारात्। परिणामरूपधर्माणामेव पुरुषे प्रतिषेधस्योक्तत्वादिति।

यथा स्फटिकेषु लौहित्यनैल्यादिधर्माणामारोपितानामपि व्यवस्थास्ति तथा पुरुषेष्वपि बुद्धिधर्माणां सुखदुःखादीनां शरीरादिधर्माणां च ब्राह्मणत्वक्षत्रियत्वादीनामारोपितानामपि व्यवस्थाऽस्ति शास्त्रेषु। यथा विष्णुपुराणे—

यथैकस्मिन् घटाकाशे रजोधूमादिभिर्वृते।
न च सर्वे प्रयुज्यन्ते एवं जीवाः सुखादिभिः॥इति॥१५२॥

साऽपि व्यवस्थैकात्म्ये सति जन्मादिव्यवस्थावन्नोपपद्यत इत्याह—

**अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात्॥ १५३॥**

अन्यधर्मत्वेऽपि धर्माणां सुखादीनामारोपात् पुरुषे व्यवस्था न सिद्ध्यति। आरोपाधिष्ठानपुरुषस्यैकत्वादित्यर्थः। आकाशस्यैकत्वेऽपि घटावच्छिन्नाकाशानां घटभेदेन भिन्नत्वौपाधिकधर्मव्यवस्था घटते आत्मत्वजीवत्वादिकन्तु नोपाध्यवच्छिन्नस्य, उपाधिवियोगे घटाकाशनाशवत् तन्नाशेन जीवो न म्रियते ( छा उ ६।११।३ ) इत्यादिश्रुतिविरोधप्रसङ्गात्। किन्तु केवलचैतन्यस्येति प्रागेवोक्तम्।

इमां बन्धमोक्षादिव्यवस्थाऽनुपपत्तिं सूक्ष्मामबुद्ध्वैवाधुनिका वेदान्तिब्रुवा उपाधिभेदेन बन्धमोक्षव्यवस्थामेवाभ्युपगच्छन्ति। तेऽप्येतेन निरस्ताः। येऽपि तदेकदेशिन इमामेवानुपपत्तिं पश्यन्त उपाधिगतचित्प्रतिबिम्बानामेव बन्धादीन्याहुः ते त्वतीव भ्रान्ताः, उक्तानुभेदाभेदादिविकल्पासहत्वादिदोषात्, अन्तःकरणस्य तदुज्ज्वलितत्वादि ( सां सू १।९९ ) सूत्रोक्तदोषाच्च।

किञ्च वेदान्तसूत्रे क्वापि सर्वात्मनामत्यन्तैक्यं नोक्तमस्ति। प्रत्युत "भेदव्यपदेशाच्चान्यः ( ब्र सू १-१-२१ ), अधिकं तु भेदनिर्देशात् ( ब्र सू २-१-२२ ), अंशो नानाव्यपदेशात्" ( ब्र सू २-३-४३ ) इत्यादिसूत्रैर्भेद उक्तः। अत आधुनिकानामयं छेदप्रतिबिम्बादिवादा अपसिद्धान्ता एव। व्यवहाराऽनुकूलमन्वयाद्यर्थेषु समानतन्त्रसिद्धान्तसंग्रह सिद्धान्तरूपाच्चेत्याद्युक्तं ब्रह्ममीमांसाभाष्ये प्रतिपादितमस्माभिः॥१५३॥

नन्वेवं पुरुषनानात्वे सति—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
(ब्र बि उ १२)

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥
(कू पु २।२।२२)

इत्याद्या श्रुतिस्मृतय आत्मैकत्वप्रतिपादिका नोपपद्यन्त इति तत्राह—

## नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥ १५४ ॥

आत्मैक्यश्रुतीनां विरोधस्तु नास्ति, तासां जातिपरत्वात्। जाति सामान्यमेकरूपत्वं, तत्रैवाद्वैतश्रुतीनां तात्पर्यात्, न त्वखण्डत्वे। प्रयोजनाभावादित्यर्थः। जातिशब्दस्य चैकरूपतार्थकत्वमुत्तरसूत्राल्लभ्यते। अथाश्रुतजातिशब्दस्यादरे—"आत्मा वा इदमेक एवाग्र आसीत्" (ऐ उ १।१।१) "सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्" (छा उ ६।२।१) इत्याद्यद्वैतश्रुत्युपपादकतयैव सूत्रं व्याख्येयम्। जातिपरत्वात्–विजातीयद्वैतनिषेधपरत्वादित्यर्थः। तत्राद्यव्याख्यायाम् अयं भावः। आत्मैक्यश्रुतिष्वेकादिशब्दाश्चिदेकरूपतामात्रपरा, भेदादिशब्दाश्च वैधर्म्यलक्षणभेदपरा ॥

एष एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥
(ब्र बि उ ११)

इत्यादिवाक्येष्वेकरूपार्थस्यावश्यकत्वात्। अन्यथावस्थात्रयेऽप्यात्मन एकतामात्रज्ञानेन स्थानत्रयव्यतीतशब्दोक्ताया अवस्थात्रयाभिमाननिवृत्तेरसम्भवात्। तथैकरूपताप्रतिपादनेनैव निखिलोपाधिविवेकेन सर्वात्मना स्वरूपशोधनसम्भवाच्च। न ह्यन्यथा निर्धर्मकमात्मस्वरूपं विविच्य ब्रह्मणापि शब्देन साक्षात्प्रतिपादयितुं शक्यते, शब्दानां सामान्यमात्रगोचरत्वात्। आब्रह्मस्तम्बपर्यन्तेष्वात्मन एकरूपत्वे तु प्रतिपादिते तदुपपत्त्यर्थं शिष्यः स्वयमेव तावद्विवेचयति यावन्निर्विशेषे शब्दागोचरे स्वरूपे पर्यवस्यतीति। ततश्च निःशेषाऽभिमाननिवृत्त्या कृतकृत्यो भवति।

यदि पुनरद्वैतवाक्यान्यखण्डतामात्रपराणि स्युस्तर्हि तेभ्यो नाभिमाननिवृत्तिः सम्भवति। आकाशे विविधशब्दवदखण्डेऽप्यात्मनि सुखदुःखादीनामवच्छेदकभेदैरुपपत्तेः। एकस्यैव वाक्यस्याखण्डत्ववैधर्म्योभयपरत्वे च वाक्यभेदोऽखण्डतापरकल्पनायां फलाभावश्च, वैधर्म्यज्ञानादेव सर्वाभिमाननिवृत्तेः।

अतोऽद्वैतवाक्यानि नाखण्डतापराणि, न्यायानुग्रहेण बलवद्भिर्भेदग्राहकश्रुतिस्मृतिभिर्विरोधाच्च। किन्त्ववैधर्म्यलक्षणाभेदपराण्येव। साम्यबोधकश्रुतिस्मृतिभिरेकवाक्यत्वात्। "सामान्यात्तु" ( अ. ३ पा २ सू ३२ ) ब्रह्मसूत्राच्चेति। तत्र साम्ये श्रुतयः—"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम। ( कठ उ ४।१५ ), निरञ्जनः परमं साम्यमुपैति" ( मु उ ३।१।३ ) इत्याद्याः स्मृतयश्च—

ज्योतिरात्मनि नान्यत्र सर्वभूतेषु तत् समम्।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा॥
यावानात्मनि वेदात्मा तावानात्मा परात्मनि।
य एवं सततं वेद जनस्थोऽपि न मुह्यति ॥इत्याद्याः॥

उक्तश्रुतौ मोक्षदशायामपि भेदघटितसाम्यवचनात् स्वरूपभेदोऽप्यात्मनामस्तीति सिद्धम्। अवैधर्म्याभेदपरत्वं चास्मन्मते "विष्णुरहं शिवोऽहम्" इत्यादिवाक्यानां मन्तव्यम्, न तु "तत्त्वमस्यहं ब्रह्मास्मि" इत्यादिवाक्यानामपि।

तत्र साङ्ख्यमते प्रलयकालीनस्य पूर्णात्मन एव सदादिपदार्थतया नित्यशुद्धमुक्तस्त्वमसीत्यादिवाक्यार्थत्वस्य तादृशवाक्यार्थत्वात्। यदि तु सर्गाद्युत्पन्नपुरुषो नारायणाख्य एव तत्पदार्थस्तदा तत्त्वमसीत्यादिवाक्यानामप्यवैधर्म्यार्थकतैवास्तु।

ननु प्रयोजनाभावाच्च भेदपरत्वं श्रुतीनां सम्भवतीति चेन्न। मोक्षोपपादनस्यैव प्रयोजनत्वात्। सृष्टिसंहारयोः प्रवाहरूपेणानुच्छेदात् तस्यैक्ये मोक्षानुपपत्तेः। अथैवमात्मभेदस्य लोकसिद्धतया न तत्परत्वं श्रुतीनां घटत इति।

नैवम्। लाघवतर्केणाकाशवदात्मन्येकत्वस्यानुमानेन प्रसक्तस्य श्रुत्यादिभिर्निषेधात्। व्यवहारेऽप्यन्ययोर्भेदस्य चाप्रत्यक्षत्वात्, देहादिभेदेनानुमयात्। "य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति"

( तै उ २।७ ) त्यादिभेदनिन्दा तु वैधर्म्यविभागान्यतरलक्षणभेदपरेति।

नन्वेवं मुक्तानां प्रतिबिम्बावच्छेदश्रुतीनां का गतिरिति चेदुच्यते। अनेकतेजोमयादित्यमण्डलवत् अनेकात्ममयमपि चिदादित्यमण्डलमेकरसमविभक्तमेकपिण्डीकृत्य तस्य किरणवत् स्वांशभूतैरसङ्ख्य पुरुषैरसङ्ख्योपाधिव्यसर्व्याचभाव एव प्रतिबिम्बादिदृष्टान्तै प्रतिपाद्यते विभागलक्षणान्यत्वस्य वाचारम्भणमात्रत्वं बोधयितु, न पुनरखण्डत्वम्।

वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।

( कठ उ १।५।१० )

इत्यादिसांशदृष्टान्तश्रुतीना न्यायानुग्रहेण बलवत्त्वादिति। यथा च स्मर्यते—

यस्य मगोतमकत्वेऽपि खण्डयते नैकपिण्डता॥ इति॥

ब्रह्ममीमांसाया तु नित्याभिव्यक्ते परमेश्वरचैतन्येऽन्येषा लयरूपाविभागेनाप्यद्वैतमुक्तम्, 'अविभागो वचनादि'ति ( अ ४ आ. २ सू १६ ) सूत्रेणेति। अधिकं तु ब्रह्ममीमांसाभाष्ये ( ४।२।४ ) प्रोक्तमस्माभिरिति दिक्॥

सूत्रस्य द्वितीयव्याख्यायां त्वयं भावः। प्रलयकाले पुरुषविजातीयं सर्वमेवासत्, अर्थक्रियाकारित्वाभावात् पुरुषाणां कूटस्थत्वेनार्थक्रियैवाप्रसिद्धेति। अतः सर्गकाल इव प्रलयेऽपि सत्त्वम्। अतस्तदात्मना विजातीयद्वैतराहित्यम्। तथा सर्गकालेऽपि कूटस्थस्य रूपपारमार्थिकसत्त्वेनास्त्यर्थेति विजातीयद्वैतराहित्यात् सर्गकालीनाद्वैतश्रुतयोऽप्युपपन्ना॥ इति॥ १५४॥

नन्वात्मन एकत्ववदेकरूपत्वमपि नानारूपताप्रत्यक्षेण विरुद्धम्, तत् कथमुक्तं जातिपरत्वादिति, तत्राह—

**विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम्॥ १५५॥**

विदितं स्पष्टं बन्धकारणमविवेको यत्र तस्य दृष्ट्यैव पुरुषेष्वतद्रूप रूपभेद इत्यर्थः। अतो भ्रान्तदृष्ट्या न रूपभेदसिद्धिरिति॥१५५॥

ननु तथाप्यनुपलम्भादेकरूपत्वाभाव सेत्स्यति—तत्राह—

**नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः॥ १५६॥**

अनुपलम्भश्चासिद्धः। अद्वैतदर्शनेऽपि ज्ञानिभिरेकरूपत्वस्य दर्शनादित्यर्थः ॥ १५६ ॥

अद्वैतश्रुत्यनुपपत्तिं समाधायाखण्डाद्वैते बाधकान्तरमाह—

वामदेवादिर्मुक्तो नाद्वैतम् ॥ १५७ ॥

वामदेवादिर्मुक्तोऽस्ति, तथापीदानीं बन्धः स्वस्मिन्ननुभवसिद्धः। अतो नाखण्डात्माद्वैतमित्यर्थः।

'स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप'।

इत्यादिवाक्यशतविरोधश्चेति शेषः। न चैवं बन्धमोक्षावुपाधेरेवेत्यवगन्तव्यम्, श्रुतिस्मृतिसिद्धान्तविरोधात्। दुःखं मा भुञ्जीयेति कामनादर्शनेन पुरुषमोक्षस्यैव मोक्षाख्यपरमपुरुषार्थत्वाच्च। उपाधेर्दुःखहानस्य च तादर्थ्येन परम्परयैव पुरुषार्थत्वात् पुत्रादिवदिति ॥

यदप्याधुनिकैर्मायावादिभिरुच्यते—अद्वैतश्रुतिविरोधाद् बन्धमोक्षसृष्टिसंहारादिश्रुतयो बाध्यन्त—इति।

तदप्यसत्। मोक्षाख्यफलस्यापि श्रवणकाले बाधावधारणे श्रवणोत्तरं मननादिनिर्भरानुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्। प्रपञ्चान्तर्गतस्य वेदान्तस्याप्यद्वैतश्रुत्या बाधे वेदान्तागतेऽप्यद्वैते पुनः सन्देहापत्तेश्च। स्वाप्नवाक्यस्य जाग्रति बाधे तद्वाक्यार्थे पुनः संशयवत्।

किञ्च "मिथ्याबुद्धिर्नास्तिकते"त्यनुशासनात्—(अमरको १।४।४) धर्मादिषु स्वाप्नवन्मिथ्यादृष्टयो बौद्धभेदा एव आधुनिकवादिनः प्रपञ्चस्यानिर्वचनीयत्वाभ्युपगमादिति दिक् ॥ १५७ ॥

ननु वामदेवादेरपि परममोक्षो न जात इत्यभ्युपेयम्, तत्राह—

अनादावद्ययावदभावाद्भविष्यदप्येवम् ॥ १५८ ॥

अनादौ कालेऽद्ययावन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालोऽप्येवं मोक्षशून्य एव स्यात्। सम्यक्साधनानुष्ठानस्याविशेषादित्यर्थः ॥ १५८ ॥

अत्र प्रयोगमाह—

इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥

सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति वर्तमानकालवदित्यनुमानं सम्मतमित्यर्थः ॥ १५९ ॥

पुरुषाणां यदेकरूपत्वमेकत्वप्रतिपादकश्रुत्यर्थावधारितं, तत् किं मोक्षकाले, किं सर्वदैवेत्याकाङ्क्षायामाह—

व्यावृत्तोभयरूपः ॥ १६० ॥

स च पुरुषो व्यावृत्तोभयरूपो, व्यावृत्तो निवृत्तो रूपभेदो यस्मात् तथेत्यर्थः । श्रुतिस्मृतिन्यायेभ्यः सदैकरूपतासिद्धेरिति शेषः । तदुक्तम्—

बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति बद्धयते ॥ इति ॥
जगदाख्यमहास्वप्ने स्वप्नात् स्वप्नान्तरं व्रजत् ।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहितम् ॥इति च॥१६०॥

ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपत्वं, तत्राह—

साक्षात्सम्बन्धात् साक्षित्वम् ॥ १६१ ॥

पुरुषस्य यत् साक्षित्वमुक्तं तत् साक्षात्सम्बन्धमात्रात्, न तु परिणामत इत्यर्थः । साक्षात्सम्बन्धेन बुद्धिमात्रसाक्षितावगम्यते, "साक्षाद् द्रष्टरि संज्ञायाम्" इति साक्षिशब्दव्युत्पादनात् । साक्षाद् द्रष्टृत्व चाव्यवधानेन द्रष्टृत्वम् । पुरुषे च साक्षात्सम्बन्धः स्वबुद्धिवृत्तेरेव भवति अतो बुद्धेरेव साक्षी पुरुषोऽन्येषां तु द्रष्टृमात्रमिति शास्त्रीयो विभागः । ज्ञाननियामकश्चार्थाकारतास्थानीयः प्रतिबिम्बरूप एव सम्बन्धो, न तु संयोगमात्रमतिप्रसङ्गादित्यसकृदावेदितम् । विष्णवादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणम् । साक्षात्सम्बन्धात् साक्षित्वमिति पाठे स्वक्षमात्र बुद्धिः करणत्वसामान्यात् । तस्या यथोक्तात् प्रतिबिम्बरूपात् सम्बन्धादित्यर्थः ॥ १६१ ॥

उभयरूपत्वाभावसिद्ध्यर्थं पुरुषस्यापरौ विशेषावाह सूत्राभ्याम्—

नित्यमुक्तत्वम् ॥ १६२ ॥

सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वम् । दुःखादेर्बुद्धिपरिणामत्वादित्यर्थः । पुरुषार्थस्तु दुःखभोगनिवृत्तिः प्रतिबिम्बरूपदुःखनिवृत्तिर्वेत्युक्तमेव ॥ १६२ ॥

औदासीन्यं चेति ॥ १६३ ॥

औदासीन्यमकर्तृत्वम् । तेन चान्येऽपि निष्कामत्वादय उपलक्ष-

णीया । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति" श्रुते । इतिशब्द पुरुषधर्मप्रतिपादनसमाप्तौ ॥ १६३ ॥

नन्वेव प्रकृतिपुरुषयोरन्योन्यं वैधर्म्येण विवेके सिद्धे पुरुषस्य कर्तृत्व बुद्धेरपि च ज्ञातृत्वं श्रुतिस्मृत्योरुच्यमान कथमुपपद्येयाता, तत्राह—

उपरागात् कर्तृत्वं चित्साान्निध्याचित्सान्निध्यात् ॥१६४॥

अत्र यथायोग्यमन्वय । पुरुषस्य यत् कर्तृत्व तद् बुद्ध्युपरागात् । बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात् । एतदुभयं न वास्तवमित्यर्थ. । यथाऽग्न्ययसो परस्पर संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको, यथा वा जलसूर्ययो सयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भाव । एतच्च कारिकयाऽप्युक्तम्—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ इति ॥

चित्सान्निध्यादिति द्वि पाठोऽध्यायसमाप्तिसूचनार्थं ॥ १६४ ॥

हेयहाने तयोर्हेतू इति व्यूहा यथाक्रमम् ।
चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन् प्रपञ्चिताः ॥ १ ॥

महद्भिःसमाट्ट्यप्रग्राणामर्थस्यात्र प्रपञ्चनात् ॥
शास्त्रं योगवदेवेदं साङ्ख्यप्रवचनाभिधम् ॥ २ ॥

इति श्रीविज्ञानाचार्यनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये विषयाध्याय प्रथम ॥ १ ॥

---

# द्वितीयोऽध्यायः

शास्त्रस्य विषयो निरूपितः। साम्प्रतं पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियामतिविस्तरेण द्वितीयाध्याये वक्ष्यति। तत्रैव प्रधानकार्याणां स्वरूपं विस्तरतो वक्तव्यम्, तेभ्योऽपि पुरुषस्यातिस्फुटविवेकाय। अत एव—

> विकारं प्रकृतिं चैव पुरुषं च सनातनम्।
> यो यथावद्विजानाति स वितृष्णो विमुच्यते॥
> (शां प २१७।३७)

इति मोक्षधर्मादिषु त्रयाणामेव ज्ञेयत्ववचनम्। तत्रादावचेतनाया प्रकृतेर्निष्प्रयोजनकर्तृत्वे मुक्तस्यापि बन्धप्रसङ्ग इत्याशयेन जगत्सर्जने प्रयोजनमाह—

**विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य॥ १॥**

कर्तृत्वमिति पूर्वाध्यायस्थसूत्रादनुषज्यते स्वभावतो दुःखबन्धाद्विमुक्तस्य पुरुषस्य प्रतिबिम्बरूपदुःखमोक्षार्थं प्रतिबिम्बसम्बन्धेन दुःखमोक्षार्थं वा प्रधानस्य जगत्कर्तृत्वम्। अथवा स्वार्थम् स्वस्य पारमार्थिकदुःखमोक्षार्थमित्यर्थः। यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनं, तथापि मुख्यत्वान्मोक्ष एवोक्तः॥ १॥

ननु मोक्षार्थं चेत् सृष्टिस्तर्हि सकृत् सृष्ट्यैव मोक्षसम्भवे पुनः पुनः सृष्टिर्न स्यादिति, तत्राह—

**विरक्तस्य तत्सिद्धेः॥ २॥**

नैकशः सृष्टेर्मोक्षः, किन्तु बहुशो जन्ममरणव्याध्यादिविविधदुःखेन भृशं तप्तस्य। ततश्च प्रकृतिपुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैव मोक्षोत्पत्तिसिद्धेरित्यर्थः॥ २॥

सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह—

**न श्रवणमात्रात् तत्सिद्धिरनादिवासनाया बलवत्त्वात्॥ ३॥**

श्रवणमपि बहुजन्मकृतपुण्येन भवति। तथापि श्रवणमात्रान्न

वैराग्यसिद्धि, किन्तु साक्षात्कारात्। साक्षात्कारश्च झटिति न भवति-अनादिमिथ्यावासनाया बलवत्त्वात्, किन्तु योगनिष्ठया। योगे च प्रतिबन्धबाहुल्यमित्यतो बहुजन्मभिरेव वैराग्यं मोक्षश्च कदाचित् कस्यचिदेव सिद्ध्यतीत्यर्थः ॥ ३ ॥

सृष्टिप्रवाहे हेत्वन्तरमाह—

## बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥

यथा गृहस्थानां प्रत्येकं बहवो भर्तव्या भवन्ति स्त्रीपुत्रादिभेदेन एव सत्त्वादिगुणानामपि प्रत्येकमसङ्ख्यपुरुषा विमोचनीया भवन्ति। अत कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोचनार्थं सृष्टिप्रवाहो घटते, पुरुषाणामानन्त्यादित्यर्थः। तथा च योगसूत्रम् "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" ( २।२२ सू० ) इति ॥ ४ ॥

ननु प्रकृतेरेव स्रष्टृत्वं कथमुच्यते "एतस्मादात्मन आकाशः सम्भूतः" ( तै० उ० २।१ ) इति श्रुत्या पुरुषस्यापि स्रष्टृत्वसिद्धेरिति, तत्राह—

## प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥

प्रकृतौ स्रष्टृत्वस्य वस्तुत्वे च सिद्धे पुरुषस्य स्रष्टृत्वाध्यास एव श्रुतिषु सिध्यति, उपासनायामेव श्रुतेस्तात्पर्यात्। "अजामेकां" ( श्वे० उ० ४।५ ) मित्यादिश्रुत्यन्तरेण प्रकृतेः स्रष्टृत्वसिद्धेः, पुंसां कूटस्थचिन्मात्रतायोधकश्रुत्यन्तरविरोधाच्चेत्यर्थः।

अयं चाध्यास उपचाररूपो लोके सिद्ध एवास्ति। यथा भृत्यनिष्ठेषु योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते, तथा भृत्यानां प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्यते, शक्तिशक्तिमदभेदात्। तदुक्तं कौर्मे—

> शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
> अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥
>
> ( कू० पु० १।१२।२८ ) इति ॥

भेदमन्योन्याभावमभेदं चाविभागरूपं प्रकृत्यादितत्त्वयोपासका पश्यन्तीत्यर्थः। तयोश्चोदाहरणम्-"अथात आदेशो नेति नेति"इत्यादि श्रुति ( बृ० उ० २।३।६ ), "आत्मैवेदं सर्व"मित्यादि (छां० उ० ७।२५।२) श्रुतिश्चेति भाव ॥ ५ ॥

नन्वेवं प्रकृतावपि स्रष्टृत्वं वास्तवमिति कुतोऽवधृतम्, सृष्टेः स्वप्नादितुल्यताया अपि श्रवणादिति, तत्राह—

कायतस्तत्सिद्धेः ॥ ६ ॥

कार्याणामर्थक्रियाकारितया वास्तवत्वेन कार्यत एव धर्मिग्राहकप्रमाणेन प्रकृतेर्वास्तवस्रष्टृत्वसिद्धेरित्यर्थः । स्वप्नादितुल्यताश्रुतयस्त्वनित्यतारूपासत्त्वांशमात्रे पुरुषाध्यस्तत्वांशे वा बोध्याः, अन्यथा सृष्टिप्रतिपादकश्रुतिविरोधात् स्वप्नपदार्थानामपि मनःपरिणामत्वेनात्यन्तासत्त्वविरहाच्चेति ॥ ६ ॥

ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तपुरुषं प्रत्यपि सा प्रवर्तेत, तत्राह—

चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥ ७ ॥

चिती संज्ञाने इति व्युत्पत्त्या चेतनोऽत्राभिज्ञः । यथैकमेव कण्टकं यश्चेतनोऽभिज्ञस्तस्मादेव मुच्यते, तं प्रत्येव दुःखात्मकं न भवति, अन्यान् प्रति तु भवत्येव । तथा प्रकृतिरपि चेतनादभिज्ञात् कृतार्थादेवमुच्यते । तं प्रत्येव दुःखात्मिका न भवति । अन्याननभिज्ञान् प्रति तु दुःखात्मिका भवत्येवेति नियमो व्यवस्थेत्यर्थः । एतेन स्वभावतो बद्धाया अपि प्रकृतेः स्वमोक्षो घटत इत्यतो न मुक्तपुरुषं प्रति प्रवर्तते ॥ ७ ॥

ननु पुरुषे स्रष्टृत्वमध्यस्तमात्रमिति यदुक्तं, ( २।५ ) तन्न युक्तम् । प्रकृतिसंयोगेन पुरुषस्यापि महदादिपरिणामौचित्यात् । दृष्टो हि पृथिव्यादियोगेन काष्ठादेः पृथिव्यादिसदृशः परिणाम इति । तत्राह—

अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥ ८ ॥

प्रकृतियोगेऽपि पुरुषस्य न स्रष्टृत्वसिद्धिराञ्जस्येन साक्षात् । तत्र दृष्टान्तोऽयोदाहवत् । यथाऽयसो न दग्धृत्वं साक्षादस्ति, किन्तु स्वसंयुक्ताग्निद्वारकमध्यस्तमेवेत्यर्थः । उक्तदृष्टान्ते तूभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते । सन्दिग्धस्थले त्वेकस्यैव परिणामेनोपपत्तावुभयोः परिणामकल्पने गौरवम् । अन्यथा जपासंयोगात् स्फटिकस्य रागपरिणामापत्तेरिति ॥ ८ ॥

सृष्टेः फलं मोक्षइति प्रागुक्तम् । इदानीं सृष्टेर्मुख्यं निमित्तकारणमाह—

रागविरागयोर्योगः सृष्टिः ॥ ९ ॥

रागे सृष्टिर्वैराग्ये च योगः स्वरूपेऽवस्थानम्, मुक्तिरिति यावत् । अथवा चित्तवृत्तिनिरोध इत्यर्थः । तथा चान्वयव्यतिरेकाभ्यां राग सृष्टिकारणमित्याशयः । तथा च श्रुतिरपि ब्रह्मादिरूपां विविधकर्मगतिमुक्त्वाह—"इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो । ब्रह्मैव सन् ब्रह्माप्येति । न तस्य प्राणा उत्क्रामन्ति" ( बृ उ ४।४।६ ) इति । रागवैराग्ये अपि प्रकृतिधर्मावेव ॥ ९ ॥

इतः परं सृष्टिप्रक्रियां वक्तुमारभते—

**महदादिक्रमेण पञ्चभूतानाम् ॥ १० ॥**

सृष्टिरिति पूर्वसूत्रादनुवर्तते । यद्य 'एतस्मादात्मन आकाशः सम्भूत' इत्यादि ( तै उ २।१ ) श्रुत्यादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथापि महदादिक्रमेणैव पञ्चभूतानां सृष्टिरित्यर्थः । तत्र आदिसृष्टिश्रुतौ गगनवायुसृष्टेरापूरणवदुक्तश्रुत्यन्तरस्यार्थो महदादिसृष्टिपूर्वेति भावः । अत्र च प्रमाणं घटसृष्टिवत् कारणानिश्चितापि सृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम् ।

किञ्च—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥

( मुण्ड उ २।१।३ )

इति श्रुत्यन्तरस्य पाठक्रमानुरोधेन "स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायु" रित्यादि ( प्रश्नोप० ६-३-४ ) श्रुत्यन्तरवत् पञ्चभूतसृष्टेः प्राङ्महदादिसृष्टिरवधार्यते इति । प्राणश्चात्र करणस्य वृत्तिभेद इति वक्ष्यति ( सां सू २।३१ ) । अतोऽस्या धर्मी प्राण एव महत्तत्त्वमिति ।

तथा वेदान्तसूत्रमपि महदादिक्रमेणैव सृष्टिं वक्ति 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गात्' ( ब्र सू २।३।१५ ) इति । महदाकाशयोरन्तरे बुद्धिमनसी उत्पद्येते इति तदर्थोऽर्थः । मनश्च प्राणस्तस्य भेदा इति ॥ १० ॥

प्रकृतेरेव स्वार्थत्वं स्वमोक्षार्थं, तस्या नित्यत्वात्, महदादीनां तु स्वस्य विनाशित्वात्स्वार्थत्वं न स्वमोक्षार्थमनित्यत्वादिति, विशेषमाह—

**आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ॥ ११ ॥**

एवां महदादीनां स्रष्टृत्वस्यात्मार्थत्वात् पुरुषमोक्षार्थत्वाच्च स्वार्थ आरम्भः। स्रष्टृत्वम् विनाशित्वेन मोक्षायोगादित्यर्थः। परमोक्षार्थकत्वे चावश्यके पुरुषमोक्षार्थकत्वमेव युक्तं, न प्रकृतिमोक्षार्थकत्वम्। तस्याः पुरुषगुणत्वादिति ॥ ११ ॥

खण्डदिक्कालयोः सृष्टिमाह—

## दिक्कालावाकाशादिभ्यः ॥ १२ ॥

नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव। अतो दिक्कालयोर्विभुत्वोपपत्तिः। "आकाशवत् सर्वगतश्च नित्य" (छां उ मा ६।३।७) इत्यादिश्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम्। यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः। आदिशब्देनोपाधिग्रहणादिति। यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ, तथापि विशिष्टस्यातिरिक्तताभ्युपगमवादेन वैशेषिकनये श्रोत्रस्य कार्यतावत् तत्कार्यत्वमत्रोक्तम् ॥ १२ ॥

इदानीं महदादिक्रमेणेत्युक्तान् (सां. सू. २।१०) स्वरूपतो धर्मतश्च क्रमेण दर्शयति—

## अध्यवसायो बुद्धिः ॥ १३ ॥

महत्तत्त्वस्य पर्यायो बुद्धिरिति। अध्यवसायश्च निश्चयाख्यस्तस्याऽसाधारणी वृत्तिरित्यर्थः। अभेदनिर्देशस्तु धर्मधर्म्यभेदात्। अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्यव्यापकत्वान्महैश्वर्याच्च मन्तव्यम् ॥

> सविकारात् प्रधानात्तु महत्तत्त्वमजायत।
> महानिति यतः ख्यातिर्लोकानां जायते सदा ॥
>
> (मत्स्यपु ३।१७)

इति स्मृते॥ "*अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद*" (बृह अ-२-ब्रा-४ म-१०) इत्यादिश्रुतिस्मृतिषु च हिरण्यगर्भे चेतनेऽपि महानिति शब्दो बुद्ध्यभिमानित्वेनैव। यथा पृथिव्यभिमानिचेतने पृथिवीशब्दस्तद्वत्। एवमेव रुद्रादिष्वहङ्कारादिशब्दोऽपि बोध्यः। प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताभिमानिपर्यन्तानां स्वस्वबुद्धिरूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैवांशा इति ॥ १३ ॥

महत्तत्त्वस्यापरानपि धर्मानाह—

तत्कार्यं धर्मादि ॥ १४ ॥

धर्मज्ञानवैराग्यैश्वर्याण्यपि बुद्ध्युपादानकानि नाहङ्कारायुपादानकानि। बुद्धेरेव निरतिशयसत्त्वकार्यत्वादित्यर्थः ॥ १४ ॥

नन्वेवं कथं नरपश्वादिगतानां बुद्धयंशानामधर्मप्राबल्यमुपपद्यताम् तत्राह—

महदुपरागाद्विपरीतम् ॥ १५ ॥

तदेव महन्महत्तत्त्वं रजस्तमोभ्यामुपरागाद्विपरीतमधर्मा ( क्षुद्र धर्मा )ऽज्ञानावैराग्यानैश्वर्यधर्मकमपि भवतीत्यर्थः। एतेन सर्वं एव पुरुषा ईश्वरा इति श्रुतिस्मृतिप्रवादोऽप्युपपादितः सर्वोपाधीनां स्वाभाविकैश्वर्यस्य रजस्तमोभ्यामेवावरणादिति।

नन्वेवं धर्माद्यवस्थानाऽर्थं बुद्धेरपि ( रेव ) नित्यत्वात् कथं कार्यतेति चेन्न। महत्तत्त्वाख्ये बीजावस्थमहत्तत्त्वे सत्त्वविशेषे धर्मवासनादीनामभ्यासात् तस्यैव ज्ञानकारणावस्थायामङ्कुरवदुपपत्त्यङ्गीकारात्। तथा चाऽऽकाशादेव नित्यानित्योभयरूपा बुद्धिः। यथाकारणं स्यात्कार्यं प्रकृतिसमायादिति ॥ १५ ॥

महत्तत्त्वं लक्षयित्वा तत्कार्यमहङ्कारं लक्षयति—

अभिमानोऽहङ्कारः ॥ १६ ॥

अहङ्करोतीत्यहङ्कारः कुम्भकारवत्[1]। अन्तःकरणद्रव्यम्। स च धर्मधर्म्यभेदादभिमान इत्युक्तोऽसाधारणवृत्तितासूचनाय। बुद्ध्या निश्चित एवार्थेऽहङ्कारममकारौ जायेते। अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिमतोरपि कार्यकारणभाव उन्नीयते इति प्रागेवोक्तम्।

अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवदवस्थात्रयमात्रभेदात् कार्यकारणभावमापद्यत इति च प्रागेवोक्तम्। अत एव वायुमात्स्ययोः —

मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः ॥

( वा. पु ४।२५ )

---

१ कुम्भकारवत् इति सूत्रेण साधुत्वम्। अन्तःकरणाहङ्कारबुद्धिः।

इति मनोबुद्ध्योरेकपर्यायत्वमुक्तमिति ॥ १६ ॥

क्रमागतमहङ्कारस्य कार्यमाह—

## एकादश पञ्चतन्मात्रं यत्कार्यम्[1] ॥ १७ ॥

एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः। मयाऽनेन इन्द्रियेण इदं रूपादिकं भोक्तव्यमिदमेव सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रियतद्विषयोत्पत्त्याऽहङ्कार इन्द्रियादिहेतुः। लोके भोगाभिमानिनैव रागद्वारा भोगोपकरणकरणदर्शनात्। 'रूपरागादभूत्चक्षु' (शा प २१३।१६) रित्यादिना मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुराद्योत्पत्तिस्मरणाच्चेति भाव। अतश्च भूतेन्द्रियपयोर्मध्ये रागधर्मकं मन एवाद्यायहङ्कारादुत्पद्यत इति विशेषस्तन्मात्रादीनां रागकार्यत्वादिति ॥ १७ ॥

तत्रापि विशेषमाह—

## सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥ १८ ॥

एकादशाना पूरणमेकादशकं मन. षोडशात्मगणमध्ये सात्त्विकम्। अतस्तद्वैकृतात् सात्त्विकादहङ्काराज्जायत इत्यर्थ। अतश्च राजसाहङ्कारादशेन्द्रियाणि, तामसाहङ्काराच्च तन्मात्राणीत्यधिगन्तव्यम्।

> वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा।
> अहंतत्त्वाद्विकुर्वाणात्मनो वैकारिकादभूत् ॥
> वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः।
> तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च ॥
> तामसो भूतसूक्ष्मादिर्यतःखं लिङ्गमात्मनः॥
>
> (भाग ३।५।३०-३१)

इत्यादिस्मृतिभ्य एव निर्णयात्। अत एव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम्—

> सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
> भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥
>
> (सां का २५)

---

[1] 'तत' इति पाठान्तरम्।

'तैजसो-राजसः। उभयं ज्ञानकर्मेन्द्रिये। ननु 'देवतालयश्रुति' (सा. सू. ३।२१) रित्यागामिसूत्रे करणानां देवान् वक्ष्यति। तत् कथं कारिकयापि देवानां सात्त्विकाहङ्कारकार्यत्वं नोक्तमिति? उच्यते—समष्टिचक्षुरादिशरीरिण सूर्यादिचेतना एव चक्षुरादिदेवता श्रूयन्ते। अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतात्वेव पर्यवस्यति। तथा च व्यष्टिसमष्ट्योरेकताऽऽशयेनात्र शास्त्रे देवा करणेभ्यो न पृथङ् निर्दिश्यन्ते। अतः समष्टीन्द्रियाणि मनोऽपेक्षयाल्पसत्त्वत्वेन राजसाहङ्कारकार्यत्वेनैव निर्दिष्टानि। स्मृतिषु च व्यष्टीन्द्रियापेक्षयाधिकसत्त्वेन सात्त्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इत्यवगन्तव्यम्। तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम्—

'सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्' ॥

(वि. पु. १।२।३४, मार्क. पु. ४५।३८)

इति स्मरणात्। त्रैविध्यं चानयोर्व्यक्तिभेदादंशभेदाद्वेत्यन्यदेतत् ॥ १८ ॥

एकादशेन्द्रियाणि दर्शयति—

**कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥ १९ ॥**

कर्मेन्द्रियाणि-वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च-चक्षुःश्रोत्रत्वग्रसनाघ्राणाख्यानि पञ्च। एतैर्दशभिः सहाऽऽन्तरं मन एकादशमेकादशेन्द्रियमित्यर्थः। इन्द्रस्य सङ्कल्पेश्वरस्य करणमिन्द्रियम्। तथा चाऽहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति ॥ १९ ॥

इन्द्रियाणां भौतिकत्वमतं निराकरोति—

**आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥ २० ॥**

इन्द्रियाणीति शेषः। आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः काललुप्ताऽप्याचार्यवाक्यात् स्मृतिभ्यश्चानुमीयते[2]। प्रत्यक्षा श्रुति "अहं बहु स्या" (छां. उ. ६।२।३ तथा ते. उ. २।६) मित्यादिः। ननु 'अन्नमयं हि सौम्य मन' (छां. उ. ६।५।४) इत्यादिभौतिकत्वश्रुतेऽपि

१ ऐक्याशयेति पाठान्तरम्।

२ आचार्य [illegible] स्मृति [illegible], स्मृत [illegible] श्रुति [illegible]। [illegible] मिति पुस्तकान्तरे प्रथमान्ताद् द्वितीयान्तं [illegible]।

श्रुतिरस्तीति चेन्न। प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाऽऽहङ्कारिकत्वश्रुतेरेव मुख्यत्वात्। भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयाऽन्नस्य मनोजन्यत्वाच्च। व्यष्टिमनआदीनां भूतसंसृष्टतयैव तिष्ठता भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकश्रुतिर्गौणीति॥ २०॥

ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटते, 'अस्य पुरुषस्याऽग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' (बृ उ ३।२।१३) इत्यादिश्रुतौ देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात्, कारण एव हि कार्यस्य लय इत्याशङ्कयाह—

## देवतालयश्रुतिर्नारम्भकस्य॥ २१॥

देवतासु या लयश्रुतिः सा नारम्भकस्य, नारम्भकविषयिणीत्यर्थः। यथानारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात्। अनारम्भकेष्वपि भूतेष्वात्मनो लयश्रवणाच्च। 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती' (बृह उप अ ब्रा ४ मंत्र १२) इत्यादिश्रुताविति भावः॥ २१॥

इन्द्रियान्तर्गतं मनो नित्यमिति केचित्, तत् परिहरति—

## तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च॥ २२॥

तेषां सर्वेषामेवेन्द्रियाणामुत्पत्तिरस्ति। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मुंडक उ द्वि प्र मं ३)। इत्यादिश्रुतेः वृद्धावस्थासु चक्षुरादीनामिव मनसोऽप्यपचयादिना विनाशनिर्णयाच्चेत्यर्थः। तथा चोक्तम्–"दशाकेन निवर्तन्ते मनः सर्वेन्द्रियाणि च"[1] इति॥ मनसो नित्यत्ववचनानि च प्रकृत्याख्यबीजपराणीति॥ २२॥

गोलकजातमेवेन्द्रियमिति नास्तिकमतमपाकरोति—

## अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठानम्[2]॥ २३॥

इन्द्रियं सर्वमतीन्द्रियं, न तु प्रत्यक्षम्। भ्रान्तानामेव त्वधिष्ठाने गोलके तादात्म्येनेन्द्रियमित्यर्थः। अधिष्ठानमित्येव पाठः॥ २३॥

---

१ नित्य मनो नादित्वात्–(गो श्रु)

२ 'अधिष्ठाने' इति पाठः।

एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणकार्यकारीति मतमपाकरोति—

**शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥**

एकस्यैवेन्द्रियस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्ध्यति शक्तीनामपीन्द्रियत्वात् । अतो नैकत्वमिन्द्रियस्येत्यर्थः ॥ २४ ॥

नन्वेकस्मादहङ्कारान्नानाविधेन्द्रियोत्पत्तिकल्पनायां न्यायविरोधस्तत्राह—

**न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥**

सुगमम् ॥ २५ ॥

एतस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदा इत्याह—

**उभयात्मकं मनः ॥ २६ ॥**

ज्ञानकर्मेन्द्रियात्मकं मन इत्यर्थः ॥ २६ ॥

उभयात्मकमित्यर्थं स्वयं विवृणोति—

**गुणपरिणामभेदान्नानात्वमवस्थावत् ॥ २७ ॥**

यथैक एव नरः सङ्गवशान्नानात्वं भजते, कामिनीसङ्गात् कामुको विरक्तसङ्गाद्विरक्तोऽन्यसङ्गाच्चान्यः, एवं मनोऽपि चक्षुरादिसङ्गाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति । तत्र हेतुः—गुणेत्यादि । गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः । एतच्च 'अन्यत्रमना अभूवं नाश्रौषम्' ( बृह १।५।३ ) मित्यादिश्रुतिसिद्धचक्षुरादीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते ॥ २७ ॥

ज्ञानकर्मेन्द्रिययोर्विषयमाह—

**रूपादिरसमलान्त उभयोः ॥ २८ ॥**

अन्नरसानां मलः पुरीषादिः । तथा रूपरसगन्धस्पर्शशब्दा वक्त-व्यादातव्यगन्तव्यानन्दयितव्योत्सर्जनीयाश्चोभयोर्ज्ञानकर्मेन्द्रिययोर्दश विषया इत्यर्थः । आनन्दयितव्यस्य चोपस्थस्योपस्थान्तरं विषय इति ॥ २८ ॥

यस्येन्द्रियस्य येनोपकारेणैतानीन्द्रियाणीत्युच्यन्ते, तदुभयमाह—

**द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥ २९ ॥**

द्रष्टृत्वादिपञ्चकं वक्तृत्वादिपञ्चकं च तदुभयविशिष्टस्य चात्मनः पुरुषस्य दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः ।

ननु द्रष्टृत्वश्रोतृत्वादिकं कदाचिदनुभवे पर्यवसानात् पुरुषस्याऽविकारिणोऽपि घटताम्, वक्तृत्वादिकं क्रियामात्रम्, तत् कथं कूटस्थस्य घटनामिति चेन्न। अयस्कान्तवत् सान्निध्यमात्रेण दर्शनादिवृत्तिकर्तृत्वस्यैवात्र द्रष्टृत्वादिशब्दार्थत्वात्। यथा हि महाराजः स्वयमव्याप्रियमाणोऽपि सैन्येन करणेन योद्धा भवत्याज्ञामात्रेण प्रेरकत्वात्, तथा कूटस्थोऽपि पुरुषश्चक्षुराद्यखिलकरणैर्द्रष्टा वक्ता सङ्कल्पयिता चेत्येवमादिर्भवति। संयोगाख्यसान्निध्यमात्रेणैव तेषां प्रेरकत्वादयस्कान्तमणिवदिति।

कर्तृत्वं चात्र कारकचक्रप्रयोक्तृत्वं, करणत्वं क्रियाहेतुव्यापारवत्त्वं, तत्साधकतमत्वं वा कुठारादिवत्। यत्तु शास्त्रेषु पुरुषे दर्शनादिकर्तृत्वं निषिध्यते तदनुकूलकृतिमत्त्वं नश्वरक्रियावत्त्वं वा। तथा चोक्तम्—

अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम्॥
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः॥

(यो. वा ४।५६।३१)

अत एव कारकचक्रप्रयोक्तृताशक्तेरात्मस्वरूपतया द्रष्टृत्ववक्तृत्वादिकमात्मनो नित्यमिति श्रूयते 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते', (बृ उ ४।३।२३) 'न हि वक्तुर्वक्तेर्विपरिलोपो विद्यत' (बृ उ. ४।३।२६) इत्यादिनेति। ननु प्रमाणविभागे प्रत्यक्षादिवृत्तीनामेव करणत्वमुक्तमत्र कथमिन्द्रियस्योच्यत इति चेन्न। अत्र दर्शनादिरूपासु चक्षुरादिद्वारकबुद्धिवृत्तिष्वेवेन्द्रियाणां करणत्ववचनात्। तत्र पुरुषनिष्ठे बोधाख्यफले वृत्तीनां करणत्वस्योक्तत्वादिति॥ २९॥

इदानीमन्तःकरणत्रयस्यासाधारणवृत्तीराह—

त्रयाणां स्वालक्षण्यम्॥ ३०॥

त्रयाणां महदहङ्कारमनसां स्वालक्षण्यं स्वं स्वं लक्षणमसाधारणी वृत्तिर्येषामिति मध्यमपदलोपी विग्रहः, तस्य भावस्तत्त्वमित्यर्थः। लोके च महतो लक्षणमध्यवसायादिरूपगुणवत्त्वम्। अहङ्कृतस्य चात्मन्यविद्यमानगुणारोपः, मनसश्चेदमस्त्वित्यङ्गीकरणमिति। तथा च बुद्धेर्वृत्तिरध्यवसायोऽभिमानोऽहङ्कारस्य सङ्कल्पविकल्पौ मनस इत्यायातम्। सङ्कल्पश्चिकीर्षा। 'सङ्कल्पः कर्ममानसम् (अम को.

१।४।११ ) मित्यनुशासनात्' विकल्पश्च संशयो योगोक्तभ्रमविशेषो वा, न तु विशिष्टज्ञानम् , तस्य बुद्धिवृत्तित्वादिति ॥ ३० ॥

त्रयाणां साधारणीं वृत्तिमप्याह—

**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ ३१ ॥**

प्राणादिरूपा पञ्च वायुवत् सञ्चारात् वायवो ये प्रसिद्धास्ते, सामान्या साधारणी करणस्यान्तःकरणत्रयस्य वृत्तिः परिणामभेदा इत्यर्थः । तदेतत् कारिकयोक्तम्—

स्वालक्षण्यं वृत्तित्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥

इति ( ईश्व का २९ )॥

अत्र कश्चित् ,-प्राणाद्या वायुविशेषा एव । ते चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया व्याप्रियन्त इति कृत्वा प्राणाद्याः करणवृत्तिरित्यभेदनिर्देश इत्याह । तन्न । 'न वायुक्रिये पृथगुपदेशा'दिति ( ब्र २ पा-४-सू-९ ) वेदान्तसूत्रेण प्राणस्य वायुत्ववायुपरिणामत्वयोः स्फुटं प्रतिषेधादत्रापि तदेकवाक्यतौचित्यात् । मनोधर्मस्य कामादेः प्राणक्षोभकतया सामानाधिकरण्येनैवौचित्याच्च ॥

वायुप्राणयोः पृथगुपदेशश्रुतयस्तु—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥

( मुंड उ २।१।३ )

इत्याद्या इति ॥ अत एव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता । बुद्धेरेव क्रियाशक्त्या सूत्रात्मप्राणादिनामकत्वादिति । अन्तःकरणपरिणामेऽपि वायुतुल्यसञ्चारविशेषाद् वायुदेवताऽधिष्ठितत्वाच्च वायु[illegible]रोपपत्तिरिति ॥ ३१ ॥

वैशेषि[illegible]मिवास्माकं नायं नियमो यदिन्द्रियवृत्तिः क्रमेणैव भवति, नैकदेत्याह—

**क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥**

सुगमम् । जातिमात्रुर्यस्योन्मत्तमदोपशयान् भामयोगमप्रधानं

सति अनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीति भावः । इन्द्रियवृत्तीनां विभागश्च कारिकया व्याख्यातः—

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥
(सां का २८) इति

आलोचनं च पूर्वाचार्यैर्व्याख्यातम्—

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
परं पुनस्तथा वस्तुधर्मैर्जात्यादिभिस्तथा ॥
(श्लो वा प्रत्यक्ष ११२, १२०) इति ॥

परमुत्तरकालीनं च पुनर्वस्तुधर्मैर्द्रव्यरूपधर्मैस्तथा जात्यादिभिर्ज्ञानं सविकल्पकं तथाऽऽलोचनाख्यं भवतीत्यर्थः । तथा च निर्विकल्पक-सविकल्पकरूपं द्विविधमप्यैन्द्रियकं ज्ञानमालोचनसंज्ञमिति लब्धम् । कश्चित्तु निर्विकल्पकं ज्ञानमेवालोचनमिन्द्रियजन्यं च भवति, सविकल्पकं तु मनोमात्रजन्यमिति श्लोकार्थमाह । तन्न । योगभाष्ये (३।४७) व्यासदेवैर्विशिष्टज्ञानस्याप्यैन्द्रियकत्वस्य व्यवस्थापितत्वात्, इन्द्रियैर्विशिष्टज्ञाने बाधकाभावाच्च । स एव सूत्रार्थमप्येवं व्याचष्टे—"बाह्येन्द्रियमारभ्य बुद्धिपर्यन्तस्य वृत्तिरुत्सर्गतः क्रमेण भवति । कदाचित् तु व्याघ्रादिदर्शनकाले भयविशेषाद्विद्युल्लतेव सर्वकरणेष्वेकदैव वृत्तिर्भवतीत्यर्थ इति" । तदप्यसत् । सूत्रे इन्द्रियवृत्तीनामेव क्रमिकाक्रमिकत्ववचनात्, न बुद्ध्यहङ्कारवृत्त्यो प्रसङ्गोऽप्यस्ति । किञ्चैकदाऽनेकेन्द्रियवृत्तावेव वादिविप्रतिपत्त्या तन्निर्णयपरत्वमेव सूत्रस्योचितं मनोऽणुत्वाप्रतिषेधाय, न तु काकदन्तान्वेषणपरत्वमिति ॥ ३२ ॥

पिण्डीकृत्य बुद्धिवृत्ती संसारनिदाननाप्रतिपादनार्थमादौ दर्शयति—

वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ३३ ॥

क्लिष्टा अक्लिष्टा वा भवन्तु वृत्तयः, पञ्चतय्यः पञ्चप्रकारा एव, नाधिका इत्यर्थः । क्लिष्टा दुःखदाः सांसारिकवृत्तयः, अक्लिष्टाश्च तद्विपरीता योगकालीनवृत्तयः । वृत्तीनां पञ्चप्रकारत्वं पातञ्जलसूत्रेणोक्तम्[1]—"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" (यो सू १।६) इति ।

---

१ समाधिपादे 'प्रमाणविपर्ययविकल्पनिद्रास्मृतय' एव वृत्तय इति सूत्रादारभ्य 'प्रत्यक्षानुमानागमाः प्रमाणानि १।७ । विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् । ८।९।१०।११ इत्यादियोगसूत्रेषु ।

तत्र प्रमाणवृत्तिरप्युक्ता (१।८७)। विपर्ययस्त्वस्माकं विवेकाग्रह एव, अन्यथाख्यातेर्निराकृतत्वात् (सा सू ५।५५)। विशेषदर्शनकालेऽपि देहो स्थिर, पुरुषस्य चेतनत्वमित्यादिज्ञानम्। निद्रा च सुषुप्तिकालीना बुद्धिवृत्ति। स्मृतिश्च संस्कारजन्यं ज्ञानमिति। एतत् सर्वं पातञ्जले सूत्रितम् (यो सू १।७-११)॥ ३३॥

या एता बुद्धिवृत्तय उक्ता एतदौपाधिक्येव पुरुषस्यान्यरूपता, न स्वत, एतन्निवृत्तौ च पुरुष स्वरूपेऽवस्थितो भवतीत्यनयापि दिशा पुरुषस्य स्वरूपं परिचाययति—

तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ ॥

तासां वृत्तीनां विरामदशायां शान्ततत्प्रतिबिम्बः स्वस्थो भवति, कैवल्ये इवान्यदापीत्यर्थः। तथा च योगसूत्रत्रयम् "योगश्चित्तवृत्तिनिरोध" (प्र पा सू २)। "तदा द्रष्टुः स्वरूपेऽवस्थानम्" (पा सू ३)। "वृत्तिसारूप्यमितरत्र" (प्र पा सू ४) इति। इदमेव च पुरुषस्य स्वस्थत्वं यदुपाधिवृत्ते प्रतिबिम्बस्य निवृत्तिरिति। एतादृशी चावस्था पुरुषस्य वासिष्ठे दृष्टान्तेन प्रदर्शिता। यथा—

अनाकाशशिलशैलादिप्रतिबिम्बे हि यादृशी।
स्यादर्पणे दर्पणता केवलात्मस्वरूपिणी ॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे।
स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ २७ ॥
(यो वा ३।४।५३-५८) इति।

एतदेव दृष्टान्तेन विवृणोति—

कुसुमवच्च मणिः ॥ ३५ ॥

चकारो इवार्थे। कुसुमेनेव मणिरित्यर्थः। यथा जपाकुसुमेन स्फटिकमणी [1]रक्तोऽरक्तोऽस्वस्थो भवति, तन्निवृत्तौ च रागशून्य स्वस्थो भवति तद्वदिति। तदेतदुक्तं कौर्मे—

यथा सलक्ष्मने रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः ॥ ३५ ॥
(कू पु २।२।२८) इति

[1] अरक्त इति पाठ स्वनिष्टत्वात्। विरुद्धत्वात् ॥ सरस्वती एव।

ननु कस्य प्रयत्नेन करणजातं प्रवर्तताम्, पुरुषस्य कूटस्थत्वादीश्वरस्य च प्रतिषिद्धत्वादिति, तत्राह—

पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥ ३६ ॥

प्रधानप्रवृत्तिवत् पुरुषार्थं करणोद्भव, करणानां प्रवृत्तिरपि पुरुषस्यादृष्टाभिव्यक्तेरेव भवतीत्यर्थ अदृष्टं चोपाधेरेव ॥ ३६ ॥

परार्थं स्वत प्रवृत्तौ दृष्टान्तमाह—

धेनुवद्वत्साय ॥ ३७ ॥

यथा वत्सार्थं धेनु स्वयमेव क्षीरं स्रवति नान्य यत्नमपेक्षते, तथैव स्वामिन पुरुषस्य कृते स्वयमेव करणानि प्रवर्त्तन्त इत्यर्थ । दृश्यते च सुषुप्तात् स्वयमेव बुद्धेरुत्थानमिति । एतदेव कारिकयाप्युक्तम्—

स्वा स्वां प्रतिपद्यन्ते परस्पराकूतहेतुका वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३७ ॥
( सां का ३१ ) इति ॥

बाह्याभ्यन्तरैर्मिलित्वा कियन्ति करणानीत्याकाङ्क्षायामाह—

करणं त्रयोदशविधमवान्तरभेदात् ॥ ३८ ॥

अन्तःकरणत्रयं दश बाह्यकरणानि मिलित्वा त्रयोदश । तेष्वपि व्यक्तिभेदेनानन्त्यं प्रतिपादयितुं विधमित्युक्तम् । बुद्धिरेव मुख्य करणमित्याशयेनोक्तम् 'अवान्तरभेदादिति, एकस्यैव बुद्ध्याख्यकरणस्य करणानामनेकत्वादित्यर्थ ॥ ३८ ॥

ननु बुद्धिरेव पुरुषेऽर्थसमर्पकत्वान्मुख्यं करणम्, अन्येषां च करणत्वं गौणम् । तत्र को गुण इत्याकाङ्क्षायामाह—

इन्द्रियेषु साधकतमत्वगुणयोगात् कुठारवत् ॥ ३९ ॥

इन्द्रियेषु पुरुषार्थसाधकतमत्वरूप करणस्य बुद्धेर्गुण परम्परयाऽस्त्यतस्त्रयोदशविधं करणमुपपद्यत इति पूर्वसूत्रेणान्वय, कुठारवदिति । यथा फलायोगव्यवच्छिन्नतया प्रहारस्यैव छिदायां मुख्यकरणत्वेऽपि प्रकृष्टसाधनत्वगुणयोगात् कुठारस्यापि करणत्वं तथेत्यर्थ । अन्तःकरणस्यैकत्वमभिप्रेत्याहङ्कारस्य गौणकरणत्वमत्र नोक्तम् ॥ ३९ ॥

गौणमुख्यभावे व्यवस्थां विशिष्याह—

**द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ॥ ४० ॥**

द्वयोर्बाह्यान्तरयोर्मध्ये मनो बुद्धिरेव प्रधानं मुख्यम्। साक्षात्करणमिति यावत्, पुरुषेऽर्थसमर्पकत्वात्। यथा भृत्यवर्गेषु मध्ये कश्चिदेव लोको राज्ञः प्रधानो भवति, अन्ये च तदुपसर्जनीभूता ग्रामाध्यक्षादयस्तद्वदित्यर्थः। अत्र मनःशब्दो न तृतीयान्तःकरणवाची। वक्ष्यमाणस्याखिलसंस्काराधारत्वस्य बुद्ध्यतिरिक्तेऽसम्भवात्। सम्भवे वा बुद्धिकल्पनवैयर्थ्यादिति ॥ ४० ॥

बुद्धेः प्रधानत्वे हेतूनाह त्रिभिः सूत्रैः —

**अव्यभिचारात् ॥ ४१ ॥**

सर्वकरणव्यापकत्वात् फलाव्यभिचाराच्चेत्यर्थः ॥ ४१ ॥

**तथाऽशेषसंस्काराधारत्वात् ॥ ४२ ॥**

बुद्धेरेवाखिलसंस्काराधारता, न तु चक्षुरादेरहङ्कारमनसोर्वा पूर्वदृष्टश्रुतादर्थानामन्धबधिरादिभिः स्मरणानुपपत्तेः। तत्त्वज्ञानेनाऽहङ्कारमनसोर्लयेऽपि स्मरणदर्शनाच्च। अतोऽशेषसंस्काराधारतयापि बुद्धेरेव सर्वस्य प्रधानत्वमित्यर्थः ॥ ४२ ॥

**स्मृत्याऽनुमानाच्च ॥ ४३ ॥**

स्मृत्या चिन्तनरूपया वृत्त्या प्राधान्याऽनुमानाच्चेत्यर्थः। चिन्ता वृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा। तदाश्रयतया च चित्ताख्यनाम्नी बुद्धिरेव श्रेष्ठाऽन्यवृत्तिकरणेभ्य इत्यर्थः ॥ ४३ ॥

ननु चिन्तावृत्तिः पुरुषस्यैवाऽस्तु, तत्राह—

**सम्भवेन्न स्वतः ॥ ४४ ॥**

स्वतः पुरुषस्य स्मृतिर्न सम्भवेत्। कूटस्थत्वादित्यर्थः। इदं चाप्याख्येयम्। नन्वेवं बुद्धिरेव करणमस्तु, किमन्यान्तःकरणैरित्याशङ्कायामाह—सम्भवेन्न स्वत इति। चक्षुरादिद्वारतां विनाऽखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न सम्भवेदन्धादेरपि रूपादिदर्शनापत्तेरित्यर्थः ॥ ४४ ॥

अत्रैव बुद्धेरेव प्राधान्ये कथं मनस उभयात्मकत्वं प्रागुक्तं, तत्राह—

**आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥ ४५ ॥**

क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभाव'। चक्षुरादि· व्यापारेषु मन· प्रधानं, मनोव्यापारे चाहङ्कारोऽहङ्कारव्यापारे च बुद्धि· प्रधानम् ॥ ४५ ॥

नन्वस्य पुरुषस्येयं बुद्धिरेव करणं, न बुद्ध्यन्तरमित्येवं व्यवस्था किन्निमित्तिकेत्याकाङ्क्षायामाह—

**तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा लोकवत् ॥ ४६ ॥**

तत्पुरुषीयकर्मजत्वात् करणस्य तत्पुरुषार्थमभिचेष्टा सर्वव्यापारो भवति लोकवत्। यथा लोके येन पुरुषेण क्रयादिकर्मणाऽर्जितो य· कुठारादिस्तत्पुरुषार्थमेव तस्य छिदादिव्यापार इत्यर्थ । अत करण· व्यवस्थेति भाव ।

यद्यपि कूटस्थतया पुरुषे कर्म नास्ति, तथापि भोगसाधनतया पुरुषस्वामिकत्वेन राज्ञो जयादिवद्देव पुरुषस्य कर्मोच्यते। ननु कर्मण एव तत्पुरुषीयत्वे किं नियामकमिति चेत्, तथाविधं कर्मान्तरमेव। अनादित्वात्तु नानवस्था दोषायेति। यत्तु कश्चिदविवेकी वदति,— बुद्धिप्रतिबिम्बितपुरुषस्य कर्मेति। तन्न, योगभाष्येऽस्मदुक्तप्रकारस्यै· वोक्तत्वेनान्यप्रकारस्याप्रामाणिकत्वात्, प्रतिबिम्बस्यावस्तुत्वेन कर्मा· द्यसम्भवाच। अन्यथा प्रतिबिम्बस्य कर्मतद्भोगाद्यङ्गीकारे बिम्बत्वा· भिमतपुरुषकल्पनावैयर्थ्यस्य पूर्वं प्रतिपादितत्वादिति ॥ ४६ ॥

बुद्धे· प्राधान्यं प्रकटीकर्तुमुपसंहरति—

**समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥ ४७ ॥**

यद्यपि पुरुषार्थत्वेन समान एव सर्वेषां करणानां व्यापारस्तथापि बुद्धेरेव प्राधान्यं लोकवत्। लोके हि राजार्थकत्वाविशेषेऽपि ग्रामा ध्यक्षादिषु मध्ये मन्त्रिण एव प्राधान्यं, तद्वदित्यर्थ । अत एव बुद्धि· रेव महानिति सर्वशास्त्रेषु गीयत इति वीप्साध्यायसमाप्तौ ॥ ४७ ॥

लिङ्गदेहस्य घटकं यत् सप्तदशसङ्ख्यकम् ।
प्रधानकार्यं तत् सूक्ष्ममत्राध्यायेऽनुवर्णितम् ॥ १ ॥

इति श्रीविज्ञानाचार्यनिर्मिते कापिलसांख्यप्रवचनस्य
भाष्ये प्रधानकार्याध्यायो द्वितीय· ॥ २ ॥

# तृतीयोऽध्यायः

इतः परं प्रधानस्य स्थूलकार्यं महाभूतानि शरीरद्वयं च वक्तव्यम्। ततश्च विविधयोनिगत्यादयो ज्ञानसाधनानुष्ठानहेतुपरवैराग्यार्थम्। ततश्च परवैराग्याय ज्ञानसाधनान्यखिलानि वक्तव्यानीति तृतीयारम्भः॥

अविशेषाद्विशेषारम्भः ॥ १ ॥

नास्ति विशेषः शान्तघोरमूढत्वादिरूपो यत्रेत्यविशेषो भूतसूक्ष्मं पञ्चतन्मात्राख्यम्। तस्माच्छान्तादिरूपविशेषवत्त्वेन विशेषाणां स्थूलानां महाभूतानामारम्भ इत्यर्थः। सुखाद्यात्मकता हि शान्तादिरूपा स्थूलभूतेष्वेव तारतम्यादिभिरभिव्यज्यते, न सूक्ष्मेषु। तेषां शान्त्यैकरूपतयैव योगिभिरभिव्यक्तेरिति ॥ १ ॥

तदेव पूर्वाध्यायमारभ्य त्रयोविंशतितत्त्वानामुत्पत्तिमुक्त्वा तस्माच्छरीरद्वयोत्पत्तिमाह—

तस्माच्छरीरस्य ॥ २ ॥

तस्मात् त्रयोविंशतितत्त्वात् स्थूलसूक्ष्मशरीरद्वयस्यारम्भ इत्यर्थः ॥ २ ॥

सम्प्रति त्रयोविंशतितत्त्वे संसारान्यथानुपपत्तिं प्रमाणयति—

तद्बीजात् संसृतिः ॥ ३ ॥

तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् सूक्ष्माद्धेतोः पुरुषस्य संसृतिर्गतागते भवतः। कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः। त्रयोविंशतितत्त्वेऽध्यस्यतो हि, पुरुषस्तेनैवोपाधिना पूर्वकृतकर्मभोगार्थं देहाद्देहं संसरति,

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्।
वाचा वाचा कृतं कर्म कायेनैव तु कायिकम् ॥

(मनु १२।७)

इत्यादिस्मृतिभिः पूर्वसर्गीयकर्मजैर्योगसर्गतः सर्गान्तरेऽप्युपभोगसिद्धेः। अत एव ब्रह्मसूत्रमुपसंहरति 'सम्परिष्वक्तः' इति—(३।१।१) संसृतेरप्यभिसन्ध्याह—

**आविवेकाच्च प्रवर्त्तनमविशेषाणाम् ॥ ४ ॥**

ईश्वरानीश्वरत्वादिविशेषरहितानां सर्वेषामेव पुंसां विवेकपर्यन्त मेव प्रवर्त्तनं संसृतिरावश्यकी । विवेकोत्तरं च न सेत्यर्थः ॥ ४ ॥

तत्र हेतुमाह—

**उपभोगादितरस्य ॥ ५ ॥**

इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः ॥५॥ देहसत्त्वेऽपि संसृतिकाले भोगो नास्तीत्याह—

**सम्प्रति परिमुक्तो द्वाभ्याम् ॥ ६ ॥**

सम्प्रति संसृतिकाले पुरुषो द्वाभ्यां शीतोष्णसुखदुःखादिद्वन्द्वैः परिमुक्तो भवतीत्यर्थः । तदेतत् कारिकयोक्तम्—

संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ।

(का ४० )॥ इति ॥

भावाः—धर्माधर्मवासनादयः ॥ ६ ॥

अत परं शरीरद्वयं विशिष्य वक्तुमुपक्रमते—

**मातापितृजं स्थूलं प्रायश इतरन्न तथा ॥ ७ ॥**

स्थूलं मातापितृजं प्रायशो बाहुल्येनायोनिजस्यापि स्थूलशरीरस्य स्मरणादितरच्च सूक्ष्मशरीरं न तथा, न मातापितृजम् । सर्गाद्युत्पन्नत्वादित्यर्थः । तदुक्तं कारिकया—

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥

( का ४० ) इति ॥

नियतं नित्यं द्विपरार्धस्थायि, गौणनित्यं प्रतिशरीरं लिङ्गोत्पत्तिकल्पने गौरवात् । प्रलये तु तन्नाशः श्रुतिस्मृतिप्रामाण्यादिष्यते । गतिकाले भोगाभाववचनमुत्सर्गाभिप्रायेण । कदाचित्तु वायवीयशरीरप्रवेशतो गमनकालेऽपि भोगो भवति । अतो यममार्गे दुःखभोगवार्ताप्युपपद्यन्ते ॥ ७ ॥

स्थूलसूक्ष्मशरीरयोर्मध्ये किमुपाधिकः पुरुषस्य द्वन्द्वयोगः ? तदवधारयति—

**पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ॥ ८ ॥**

पूर्वं सर्गादावुत्पत्तिर्यस्य लिङ्गशरीरस्य तस्यैव, तत्कार्यत्वं सुखदुःखकार्यकत्वम्। कुतः? एकस्य लिङ्गदेहस्यैव सुखदुःखादिभोगात्, न त्वितरस्य स्थूलशरीरस्य। मृतशरीरे सुखदुःखाद्यभावस्य सर्वसम्मतत्वादित्यर्थः ॥ ८ ॥

उक्तस्य सूक्ष्मशरीरस्य स्वरूपमाह—

सप्तदशैकं लिङ्गम् ॥ ९ ॥

सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति। तत्र सप्तदश मिलित्वा लिङ्गशरीरम्। तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः। एकादशेन्द्रियाणि पञ्च तन्मात्राणि बुद्धिश्चेति सप्तदश। अहंकारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्रवक्ष्यमाणप्रमाणादेतान्येव सप्तदशानि लिङ्गं मन्तव्यं, न तु सप्तदशैकं चेत्यष्टादशतया व्याख्येयम्। उत्तरसूत्रेण व्यक्तिभेदस्योपपादनयात्र लिङ्गैकत्वस्य एकशब्दस्य तात्पर्यावधारणात् ॥

कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते।
स सप्तदशकेनापि राशिना युज्यते च सः ॥
(मो. ध. २०३।१५–१६)

इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वनिर्देशः। यस्मात् सप्तदश यस्य अत्र सन्तीति सप्तदशको राशिरित्यर्थः। राशिशब्देन स्थूलदेहवल्लिङ्गदेहस्यावयवित्वं निरस्तम्। अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य त्ववयविसमवेतत्वादिप्रत्यक्षानुरोधेन कल्प्यत इति। अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोग प्रागुक्त। प्राणश्चान्तःकरणस्यैव वृत्तिभेदः। अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भावः। इदमेव सप्तदशावयवकस्य शरीरस्य स्वयं वक्ष्यन्ति— "लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः" (६।६९) इति सूत्रेण। अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणम्। तदाश्रयतया स्थूलस्य शरीरत्वमिति पश्चाद् व्यक्तीभविष्यति। "चेष्टेन्द्रियार्थाश्रयः शरीर" मिति तु न्यायेऽपि (१।१।११) तथैव लक्षणं कृतमिति ॥ ९ ॥

नन्वेकं लिङ्गं चेदेकं, तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युरत आह—

व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥

यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं, तथापि तस्य

पश्चाद् व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति। यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति, पुत्रकन्यादिलिङ्गदेहरूपेण। तत्र कारणमाह—कर्मविशेषादिति। जीवान्तराणां भोगहेतुकर्माद्देरित्यर्थः। अत्र विशेषवचनात् समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिर्भवतीत्यायातम्। अयं च व्यक्तिभेदो मन्वादिष्वप्युक्तः। यथा मनौ समष्टिपुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरम्,

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे॥
(मनु १।१६) इति॥

षण्णामिति समस्तलिङ्गशरीरोपलक्षणम्। आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः। तथा च तत्रैव वाक्यान्तरम्—

तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः॥इति॥१०॥

नन्वेवं भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले कथं शरीरव्यवहारस्तत्राह—

**तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः॥ ११॥**

तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौशिकदेहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहवादादित्यर्थः। लिङ्गसम्बन्धादधिष्ठानस्य देहत्वमधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्यवसितोऽर्थः। अधिष्ठानं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते। तथाच शरीरत्रयं सिद्धम्। यत्तु

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः।
सर्वासां भूतजातीनां ब्रह्मणस्त्वेक एव किम्॥

इत्यादिशास्त्रेषु शरीरद्वयमेव श्रूयते तल्लिङ्गशरीराधिष्ठानशरीरयोरन्योन्यनियतत्वेन सूक्ष्मत्वेन चैकताभिप्रायादिति॥ ११॥

ननु षाट्कौशिकातिरिक्ते लिङ्गशरीराधिष्ठानभूते शरीरान्तरे किं प्रमाणमित्याकाङ्क्षायामाह—

**न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च॥ १२॥**

लिङ्गशरीरमशेषविशेषतो विचारितम्, इदानीं स्थूलशरीरमपि तथा विचारयति—

पाञ्चभौतिको देहः ॥ १७ ॥

पञ्चानां भूतानां मिलितानां परिणामो देह इत्यर्थः ॥ १७ ॥

मतान्तरमाह—

चातुर्भौतिकमित्येके ॥ १८ ॥

आकाशस्यानारम्भकत्वमभिप्रेत्येदम् ॥ १८ ॥

ऐकभौतिकमित्यपरे ॥ १९ ॥

पार्थिवमेव शरीरमन्यानि च भूतान्युपष्टम्भकमात्राणीति भावः। अथवैकभौतिकत्वेनैकभौतिकमित्यर्थः। मनुष्यादिशरीरे पार्थिवांशाधिक्येन पार्थिवता सूर्यादिलोकेषु च तेजोभागाधिक्येन तैजसादिता शरीराणां सुवर्णादीनामिवेतीममेव पक्षं पञ्चमाध्यायेऽपि सिद्धान्तयिष्यति ॥ १९ ॥

देहस्य भौतिकत्वेन यत् सिध्यति तदाह—

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥ २० ॥

भूतेषु पृथक् स्थितेषु चैतन्यादर्शनाद्भौतिकस्य देहस्य न स्वाभाविकं चैतन्यं, किन्त्वौपाधिकमित्यर्थः ॥ २० ॥

बाधकान्तरमाह—

प्रपञ्चमरणाद्यभावश्च ॥ २१ ॥

प्रपञ्चस्य सर्वस्यैव मरणसुषुप्त्याद्यभावश्च देहस्य स्वाभाविकचैतन्ये सति स्यादित्यर्थः। मरणसुषुप्त्यादिकं हि देहस्याचेतनता। सा च स्वाभाविकचैतन्ये सति नोपपद्यते। स्वभावस्य यावद्द्रव्यभावित्वादिति ॥ २१ ॥

प्रत्येकादृष्टेरिति यदुक्तं, तत्राशङ्क्य परिहरति—

मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ॥ २२ ॥

ननु यथा मादकशक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्तते, एवं चैतन्यमपि स्यादिति चेत्? न प्रत्येकपरिदृष्टे सति सांहत्ये तदुद्भवः सम्भवेत्। प्रकृते तु प्रत्येकपरिदृष्टत्वं नास्ति। अतो दृष्टान्ते

प्रत्येकं शाल्यादिभि सूक्ष्मतया मादकत्वे सिद्धे संहतभावकाले मादकत्वाविर्भावमात्र सिद्ध्यति। दार्ष्टान्तिके तु प्रत्येकभूतेषु सूक्ष्मतया न केनापि प्रमाणेन चैतन्यं सिद्धमित्यर्थः। ननु समुचिते चैतन्यदर्शनेन प्रत्येकभूते सूक्ष्मचैतन्यशक्तिरनुमेयेति चेन्न अनेकभूतेष्वनेकचैतन्यकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात्। ननु यथावयवेऽवर्त्तमानमपि परिमाणजलाहरणादिकार्यं घटादौ दृश्यते, एवमेव शरीरे चैतन्यं स्यादिति। मैवम्। भूतगतविशेषगुणाना सजातीयकारणगुणजन्यतया कारणे चैतन्यं विना देहे चैतन्यासम्भवादिति ॥ २२ ॥

पुरुषार्थं संसृतिर्लिङ्गानामित्युक्तम्। तत्र लिङ्गानां स्थूलदेहसम्बन्धाख्यजन्मनो यो य पुरुषार्थो येन येन व्यापारेण सिद्ध्यति, तदाह सूत्राभ्याम्—

## ज्ञानान्मुक्तिः ॥ २३ ॥

लिङ्गसंसृतितो जन्मद्वारा विवेकसाक्षात्कारस्तस्मान्मुक्तिरूप पुरुषार्थो भवतीत्यर्थः। ज्ञानादिकं च प्रत्ययसर्गतया कारिकायां परिभाषितम्—

'एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः' ॥ (ईश्व ४६)इति ॥

विपर्ययादयो व्याख्यास्यन्ते। अत्र च स एव बुद्धिसर्गः प्रयोजनयोगेन सूत्रैरुच्यत इति विशेषः ॥ २३ ॥

## बन्धोविपर्ययात् ॥ २४ ॥

विपर्ययात् सुखदुःखात्मको बन्धरूपः पुरुषार्थो लिङ्गसंसृतितो भवतीत्यर्थः ॥ २४ ॥

ज्ञानविपर्ययाभ्यां मुक्तिबन्धावुक्तौ। तत्रादौ ज्ञानान्मुक्तिं विचारयति—

## नियतकारणत्वान्न समुच्चयविकल्पौ ॥ २५ ॥

यद्यपि, "विद्या चाविद्या च यस्तद्वेदोभयं सह" इत्यादि (ईशा. उ ११) श्रूयते तथाप्यविवेकनिवृत्तौ लोकसिद्धतया ज्ञानस्य नियतकारणत्वाद् अविद्याख्यकर्मणा सह ज्ञानस्य मोक्षजनने समुच्चयो विकल्पो वा नास्तीत्यर्थः। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वेता उ ३।८, ६।१५) "न कर्मणा न प्रजया

एवमुपासकस्य बुद्धिसत्त्वमपि प्रकृतिप्रेरणेन सृष्ट्यादिकर्तृ भवतीति ॥ २९ ॥

ज्ञानमेव मोक्षसाधनमिति स्थापितम्। इदानीं ज्ञानसाधनान्याह—

रागोपहतिर्ध्यानम् ॥ ३० ॥

ज्ञानप्रतिबन्धको यो विषयोपरागश्चित्तस्य तदुपघातहेतुर्ध्यानमित्यर्थः। उपचारेण कार्यकारणयोरभेदनिर्देशः, रागक्षयस्य ध्यानत्वासम्भवात्। अत्र ध्यानशब्देन धारणाध्यानसमाधयो योगोक्तास्त्रय एव ग्राह्या, पातञ्जले योगाङ्गानामष्टानामेव विवेकसाक्षात्कारहेतुत्वश्रवणादिति। एतेषां चावान्तरविशेषास्तत्रैव द्रष्टव्याः। इतराणि च पञ्चाङ्गानि स्वयं वक्ष्यति ॥ ३० ॥

ध्याननि·पत्त्यैव ज्ञानोत्पत्तिर्नारम्भमात्रेणेत्याशयेन ध्याननिष्पत्ते· र्लक्षणमाह—

वृत्तिनिरोधात् तत्सिद्धिः ॥ ३१ ॥

ध्येयातिरिक्तवृत्तिनिरोधरूपेण सम्प्रज्ञातयोगेन तत्सिद्धिर्ध्यानस्य निष्पत्तिर्ज्ञानाख्यफलोपधानरूपा भवतीत्यर्थः। अतस्तावत्पर्यन्तमेव ·यानं कर्त्तव्यमित्याशय। इतरवृत्तिनिरोधे सत्येव विषयान्तर· वि·राद्यप्रतिबन्धापगमाद्ध्येयसाक्षात्कारो भवतीति कृत्वा योगोऽपि योगेन स··रणं, योगाङ्गध्यानादिवदित्यपि मन्तव्यम्। "अध्यात्मयोगाधि· ।मत्वा धीरो हर्षशोकौ जहाति" (क उ १।२।१२) इत्यादि· त्योक्तदयगमादिति ॥ ३१ ॥

विपर्
भवती··यानस्यापि साधनान्याह—

धारणासनस्वकर्मणा तत्सिद्धिः ॥ ३२ ॥

वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः ॥ ३२ ॥

धारणादित्रयं क्रमात् सूत्रत्रयेण लक्षयति—

निरोधश्छर्दिविधारणाभ्याम् ॥ ३३ ॥

प्राणस्येति प्रसिद्ध्या लभ्यते। "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" (यो सू १।३४) इति योगसूत्रे भाष्यकारेण प्राणायामस्य व्याख्यानत्वात्। छर्दिश्च वमनम्। विधारणं त्याग इति यावत्। तेन पूरणरेचनयोर्लाभ। विधारणं च कुम्भकम्। तथा च प्राणस्य पूरक-रे-

रेचक-कुम्भकैर्यो निरोधो वशीकरणं, सा धारणेत्यर्थः । आसनकर्मणोः स्वशब्देन पश्चाल्लक्षणीयतया सूत्रे परिशेषत एव धारणाया लक्ष्यत्वलाभाद्धारणापदं नोपात्तम् । चित्तस्य धारणा तु समाधिवद् ध्यानशब्देनैव गृहीतेत्युक्तम् ॥ ३३ ॥

क्रमप्राप्तमासनं लक्षयति—

स्थिरसुखमासनम् ॥ ३४ ॥

यत् स्थिरं सत् सुखसाधनं भवति स्वस्तिकादि, तदासनमित्यर्थः ॥ ३४ ॥

स्वकर्म लक्षयति—

स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥ ३५ ॥

सुगमम् । अत्र कर्मशब्देन यमनियमयोर्ग्रहणम् । जितेन्द्रियत्वरूपप्रत्याहारोऽपि सर्वाश्रमसाधारणतया कर्ममध्ये प्रवेशनीयः । तथा च पातञ्जलसूत्रे ज्ञानसाधनतया प्रोक्तान्यष्टौ योगाङ्गान्यत्राऽपि लब्धानि । यथा तत्सूत्रम्—'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानी'ति । तेषां च स्वरूपं तत्रैव द्रष्टव्यम् ॥ ३५ ॥

मुख्याधिकारिणो नास्ति बहिरङ्गस्य यमादिपञ्चकस्यापेक्षा केवलाद्धारणाध्यानादिरूपात् संयमादेव ज्ञानं योगश्च भवतीति पातञ्जलसिद्धान्तः । जडभरतादिषु च तथा दृश्यतेऽपि । अतस्तदनुसारेणाचार्योऽप्याह—

वैराग्यादभ्यासाच्च ॥ ३६ ॥

केवलादभ्यासाद् ध्यानरूपादेव वैराग्यसहितादात्मज्ञानं तत्साधनयोगश्च भवत्युत्तमाधिकारिणामित्यर्थः । तदुक्तं गारुडेऽपि—

आसनस्थानविधयो न योगस्य प्रसाधकाः ।
विलम्बजननाः सर्वे विस्तराः परिकीर्तिताः ॥
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥

( गरु. पु. १।२२७।४४, ४५ इति ) ॥

अथवा वैराग्याभ्यासाभ्यामपि ध्यानस्यैव हेतुतयोक्तौ, यमादय धारणासनमुख्योपायार्था इति । तदेव ज्ञानान्मोक्षो ( सां. सू. ३।२३ ) व्याख्यातः ॥ ३६ ॥

अत परं बन्धो विपर्ययादित्युक्तो ( सां सू ३।२४ ) बन्धकारणं विपर्ययो व्याख्यास्यते । तत्रादौ विपर्ययस्य स्वरूपमाह—

## विपर्ययभेदाः पञ्च ॥ ३७॥

अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च योगोक्ता ( यो सू २।३ ) बन्धहेतुविपर्ययस्यावान्तरभेदा इत्यर्थः । तेन शुक्त्यादिज्ञानरूपाणां विपर्ययाणामसङ्ग्रहेऽपि न क्षतिः। तत्राविद्या, अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरिति योगे प्रोक्ता ( यो सू २।५ ) । एवमस्मिताऽपि आत्मानात्मनोरेकताप्रत्ययः, शरीराद्यतिरिक्त आत्मा नास्तीत्येवंरूपः । अविद्या तु नैवंरूपा। आत्मनः शरीराशरीरोभयरूपत्वेऽपि शरीरेऽहम्बुद्ध्युपपत्तेः । रागद्वेषौ तु प्रसिद्धावेव । अभिनिवेशश्च मरणादित्रास इति । रागादीनां विपर्ययकार्यतया विपर्ययत्वम् ॥ ३७ ॥

विपर्ययस्य स्वरूपमुक्त्वा तत्कारणस्याशक्तेरपि स्वरूपमाह—

## अशक्तिरष्टाविंशतिधा तु ॥ ३८ ॥

सुगमम् । एतदपि कारिकया व्याख्यातम्—

> एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
> सप्तदश वधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम् ॥
> ( सां का ४९ इति ) ॥

> बाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा ।
> मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमुग्धताः ॥

इत्येकादशेन्द्रियाणामेकादशाऽशक्तयः स्वतश्च बुद्धेः सप्तदशाऽशक्तयः । यथा वक्ष्यमाणानां नवतुष्टीनां विघाता नव, तथा वक्ष्यमाणानामष्टसिद्धीनां च विघाता अष्टाविति मिलित्वा चेमाः स्वतः परतश्चाष्टाविंशतिर्बुद्धेरशक्तय इत्यर्थः । तु-शब्द एषां विशेषप्रसिद्धिख्यापनार्थः ॥ ३८ ॥

ययोर्विघाते बुद्धेरशक्ती ते तुष्टिसिद्धी सूत्रद्वयेनाह—

## तुष्टिर्नवधा ॥ ३९ ॥

स्वयमेव नवधात्वं वक्ष्यति ( सां सू ३।४३ ) ॥ ३९ ॥

गमनात् परमकारुणिकाज्ज्ञानलाभ इति। दानं च यथा धनादिदानेन परितोषिताज्ज्ञानलाभ इति। एषु च पूर्वस्त्रिविध ऊहशब्दाध्ययनरूपो मुख्यसिद्धेरङ्कुश आकर्षकः। सुहृत्प्राप्तिदानयोरूहादित्रयापेक्षया मन्दसाधनत्वप्रतिपादनायेदमुक्तम्।

केचित्त्वेतासामष्टसिद्धीनामङ्कुशो निवारकः पूर्वोक्तस्त्रिविधो विपर्ययाशक्तितुष्टिरूपो भवति बन्धकत्वादिति व्याचक्षते, तन्न। तुष्ट्यभावस्याशक्तितया वाधिर्यादिवत् सिद्धिविरोधितालाभेन तुष्ट्यतुष्ट्योरुभयोः सिद्धिविरोधित्वासम्भवात् ॥ ४४ ॥

ननूहादिभिरेव कथं सिद्धिरुच्यते। मन्त्रतपःसमाध्यादिभिरप्यणिमाद्यष्टसिद्धेः सर्वशास्त्रसिद्धत्वादिति, तत्राह—

नेतरादितरहानेन विना ॥ ४५ ॥

इतरादूहादिपञ्चकभिन्नात् तपआदेर्या तात्त्विकी न सिद्धिः। कुतः? इतरहानेन विना। यतः सा सिद्धिरितरस्य विपर्ययस्य हानं विनैव भवत्यतः संसारापरिपन्थित्वात् सा सिद्ध्याभास एव, न तु तात्त्विकी सिद्धिरित्यर्थः। तथा चोक्तं योगसूत्रेण "ते समाधावुपसर्गा व्युत्थाने सिद्धयः" (यो॰ सू॰ ३।३७) इति।

तदेवं ज्ञानान्मुक्तिः (सां॰ सू॰ ३।२३) इत्यारभ्य विस्तरतो बुद्धिगुणरूपः प्रत्ययसर्गः सकार्यबन्धो मोक्षरूपपुरुषार्थेन सहोक्तः। एतौ च बुद्धितद्गुणरूपौ सर्गौ प्रवाहरूपेणान्योन्यहेतू बीजाङ्कुरवत्। तथा च कारिका—

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।
लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्तते सर्गः॥
(सां॰ का॰ ५२) इति॥

भावो वासनारूपा बुद्धेर्ज्ञानादिगुणाः लिङ्गं महत्तत्त्वं बुद्धिरिति। समष्टिसर्गः प्रत्ययसर्गश्च समाप्तः ॥ ४५ ॥

साम्प्रतं व्यष्टिभेदः कर्मविशेषादिति (सां॰ सू॰ ३।१०) सूत्रेणोक्ता व्यष्टिसृष्टिर्विस्तरतः प्रतिपाद्यते—

दैवादिप्रभेदा ॥ ४६ ॥

दैवादिः प्रभेदोऽवान्तरभेदो यस्याः सा तथा सृष्टिरिति शेषः। एतदेव कारिकया व्याख्यातम्—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥
(सां का ५३) इति ॥

ब्राह्मप्राजापत्यैन्द्रपैत्रगान्धर्वयाक्षराक्षसपैशाचा इत्यष्टविधो दैवसर्गः । पशुमृगपक्षिसरीसृपस्थावरा इति तैर्यग्योनः पञ्चविधः । भौतिको भूतानां व्यष्टिप्राणिनां विराजः सकाशात् सर्ग इत्यर्थः ॥४६॥

अथान्तरसृष्टेरप्युक्ताया पुरुषार्थत्वमाह—

आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात् ॥ ४७ ॥

चतुर्मुखमारभ्य स्थावरान्ता व्यष्टिसृष्टिरपि विराट्सृष्टिवदेव पुरुषार्था भवति । तत्तत्पुरुषाणां विवेकख्यातिपर्यन्तमित्यर्थः ॥ ४७ ॥

व्यष्टिसृष्टावपि विभागमाह सूत्रत्रयेण—

ऊर्ध्वं सत्त्वविशाला ॥ ४८ ॥

ऊर्ध्वं भूर्लोकादुपरि सृष्टिः सत्त्वाधिका भवतीत्यर्थः ॥ ४८ ॥

तमोविशाला मूलतः ॥ ४९ ॥

मूलतो भूर्लोकादध इत्यर्थः ॥ ४९ ॥

मध्ये रजोविशाला ॥ ५० ॥

मध्ये भूर्लोके इत्यर्थः ॥ ५० ॥

नन्वेकस्या एव प्रकृतेः केन निमित्तेन सत्त्वादिविशालतया विचित्रा सृष्टय इत्याकाङ्क्षायामाह—

कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥ ५१ ॥

विचित्रकर्मनिमित्तादेव यथोक्ता प्रधानस्य चेष्टा कार्यवैचित्र्यरूपा भवति, वैचित्र्ये दृष्टान्तो गर्भदासवदिति । यथा गर्भावस्थामारभ्य यो दासस्तस्य भृत्यवासनापाटवेन नानाप्रकारा चेष्टा परिचर्या स्वाम्यर्थे भवति, तद्वदित्यर्थः ॥ ५१ ॥

ननु चेदूर्ध्वे सत्त्वविशाला सृष्टिरस्ति तर्हि तत्र एव कृतार्थत्वात् पुरुषस्य किं मोक्षेणेति, तत्राह—

आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥

तथाप्यूर्ध्वगतावपि सत्यामावृत्तिरस्त्यत उत्तरोत्तरयोनियोगाद्धोऽधोयोनिजन्मतः सोऽपि लोको हेय इत्यर्थः ॥ ५२ ॥

किञ्च—

समानं जरामरणादिजं दुःखम् ॥ ५३ ॥

ऊर्ध्वाधोगतानां ब्रह्मादिस्थावरान्तानां सर्वेषामेव जरामरणादिजं दुःखं साधारणमतोऽपि हेय इत्यर्थः ॥ ५३ ॥

किं बहुना कारणे लयादपि न कृतकृत्यतेत्याह—

न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥ ५४ ॥

विवेकज्ञानाभावे यदा महदादिषु वैराग्यं प्रकृत्युपासनया भवति, तदा प्रकृतौ लयो भवति, 'वैराग्यात् प्रकृतिलयः' ( सां० का० ४५ ) इति वचनात्। तस्मात् कारणलयादपि न कृतकृत्यतास्ति, मग्नवदुत्थानात्। यथा जले मग्नः पुरुषः पुनरुत्तिष्ठति, एवमेव प्रकृतिलीनाः पुरुषा ईश्वरभावेन पुनराविर्भवन्ति। संस्कारादिदोषक्षयेण पुना रागाभिव्यक्तेर्विवेकख्यातिं विना दोषदाहानुपपत्तेरित्यर्थः ॥ ५४ ॥

ननु कारणं केनाऽपि न कार्यतेऽतः स्वतन्त्रा कथं स्वोपासकस्य दुःखनिदानमुत्थानं पुनः करोति, तत्राह—

अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५ ॥

प्रकृतेरकार्यत्वेऽप्यप्रेर्यत्वेऽप्यन्येच्छानधीनत्वेऽपि, तद्योगः—पुनरुत्थानौचित्यं तल्लीनस्य। कुतः? पारवश्यात्—पुरुषार्थतन्त्रत्वात्। विवेकख्यातिरूपपुरुषार्थवशेन प्रकृत्या पुनरुत्थाप्यते स्वल्लीन इत्यर्थः। पुरुषार्थादन्यः प्रकृतेर्न प्रेरकः, किन्तु प्रवृत्तिस्वभावायाः प्रवृत्तौ निमित्तमात्रमिति न स्वातन्त्र्यहानिः। तथा च योगसूत्रम् "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" इति ( यो० सू० ३।४ )। वरणभेदः—प्रतिबन्धनिवृत्तिः ॥ ५५ ॥

प्रकृतिलयात् पुरुषस्योत्थाने प्रमाणमप्याह—

स हि सर्ववित् सर्वकर्ता ॥ ५६ ॥

स हि पूर्वसर्गे कारणलीनः सर्गान्तरे सर्ववित् सर्वकर्तेश्वर आदिपुरुषो भवति। प्रकृतिलये तस्यैव प्रकृतिपदप्राप्त्यौचित्यात्। "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य" ( बृह० उ० ४।४।६ ) इत्यादि श्रुतेरित्यर्थः ॥ ५६ ॥

नन्वेवमीश्वरप्रतिषेधानुपपत्तिस्तत्राह—

## ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥

प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिः, "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" (मुंड उ १।१।९) इत्यादि श्रुतिभ्यः सर्वसम्मतैव, नित्येश्वरस्यैव विवादास्पदत्वादित्यर्थः। सूत्रद्वयमिदं व्याख्याय पारद्वयमपि प्रतिपादयति 'स हीति' सूत्रेण। स हि परः पुरुषसामान्यं सर्वज्ञानशक्तिमत् सर्वकर्तृताशक्तिमच्च। अयस्कान्तवत् सन्निधिमात्रेण प्रेरकत्वादित्यर्थः। तदा चासमाप्तार्थपुरुषसान्निध्यात् तदर्थमन्येच्छाऽनधीनाया अपि प्रकृतेः प्रवृत्तिरावश्यकीति॥

नन्वेवमीश्वरप्रतिषेधविरोधः (सां सू १।९२) स्तत्राह—ईदृशेश्वरसिद्धिः सिद्धा। सान्निध्यमात्रेणेश्वरस्य सिद्धिस्तु श्रुतिस्मृतिषु सर्वसम्मतेत्यर्थः॥

> अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
> ईशानो भूतभव्यस्य न ततो विजुगुप्सते॥
>
> (क उ २।१।१२)
>
> सृजते च गुणान् सर्वान् क्षेत्रज्ञस्त्वनुपश्यति।
> गुणान् विक्रियते सर्वानुदासीनवदीश्वरः॥

इत्यादिश्रुतिस्मृतयश्चैतादृशेश्वरे प्रमाणमिति॥ ५७॥

द्वितीयाध्यायादिमारभ्यैतावत्पर्यन्तं सूत्रव्यूहे प्रधानसृष्टिः समापिता। इतः परं मोक्षोपपत्त्यर्थं प्रधानसृष्टेर्ज्ञानिपुरुषं प्रति अत्यन्तनिवृत्तिरत्यन्तलयाख्या वक्तव्या, तदुपपत्त्यर्थमादौ प्रधानसृष्टेः प्रयोजनं द्वितीयाध्यायस्यादिसूत्रे विमुक्त्यर्थेणोक्तं विस्तरतः प्रतिपादयति—

## प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत्॥ ५८॥

प्रधानस्य स्वत एव सृष्टिर्यद्यपि तथापि परार्थमन्यस्य भोगापवर्गार्थम्। यथोष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थम्। कुतः? अभोक्तृत्वादचेतनत्वेन भोगापवर्गासम्भवादित्यर्थः।

ननु विमुक्तमोक्षार्थं स्वार्थं वेत्यनेन स्वार्थापि सृष्टिरुक्तेति चेत्।

सत्यम्। तथापि पुरुषार्थेन विना स्वार्थेनापि न सिद्ध्यति। स्वार्थो हि प्रधानस्य कृतभोगापवर्गात् पुरुषादात्मविमोक्षणमिति।

ननु भृत्यतुल्या चेत् प्रकृतिस्तर्हि कथं स्वामिनो दुःखार्थमपि प्रवर्तत इति चेन्न। सुखार्थप्रवृत्त्यैव नान्तरीयकदुःखसम्भवाद् दुष्टभृत्यतुल्यत्वाच्चेति ॥ ५८ ॥

ननु प्रधानस्याचेतनस्य स्वतः प्रवृत्तत्वमेव नोपपद्यते रथादेः परप्रयत्नेनैव प्रवृत्तिदर्शनादिति, तत्राह—

**अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ५९ ॥**

यथा क्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते, एवमचेतनत्वेऽपि परप्रयत्नं विनापि महदादिरूपपरिणामः प्रधानस्य भवतीत्यर्थः। 'धेनुवद्वत्साय' (सां० सू० २।३७) इत्यनेन सूत्रेणास्य न पौनरुक्त्यम्। तत्र करणप्रवृत्तेरेव विचारितत्वात् धेनूनां चेतनत्वाच्चेति ॥ ५९ ॥

दृष्टान्तान्तरप्रदर्शनपूर्वकमुक्तार्थेऽनुमाह—

**कर्मवद् दृष्टेर्वा कालादेः ॥ ६० ॥**

कालादेः कर्मवद्वा स्वत एव प्रधानस्य चेष्टेति सिद्ध्यति, दृष्टत्वात्। अथैको गच्छति ऋतुरितरश्च प्रवर्तत इत्यादिरूपं कालादिकर्म स्वत एव भवत्येवं प्रधानस्यापि चेष्टा स्यात्। कल्पनाया दृष्टानुसारित्वादित्यर्थः ॥ ६० ॥

ननु तथापि ममेदं भोगादिसाधनमिति प्रतिसन्धानाभावात्मूढा या प्रकृतेः कदाचित् प्रवृत्तिरपि न स्यात्, विपरीता च प्रवृत्तिः स्यात्। तत्राह—

**स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ॥ ६१ ॥**

---

१ [illegible]

यथा प्रकृष्टभृत्यस्य स्वभावात् संस्कारादेव प्रतिनियताऽऽवश्यकी च स्वामिसेवा प्रवर्तते, न तु स्वभोगाभिप्रायेण, तथैव प्रकृतेश्चेष्टितं संस्कारादेवेत्यर्थः ॥ ६१ ॥

कर्माकृष्टेर्वानादितः ॥ ६२ ॥

वाशब्दोऽत्र समुच्चये । यतः कर्मानादितः कर्मभिराकर्षणादपि प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः ॥ ६२ ॥

तदेवं प्रधानस्य परार्थतः स्रष्टृत्वे सिद्धे परप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षं सिद्धवदाह प्रघट्टकेन—

विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥ ६३ ॥

विविक्तपुरुषज्ञानात् परवैराग्येण पुरुषार्थसमाप्तौ प्रधानस्य सृष्टिर्निवर्तते । यथा पाके निष्पन्ने पाचकस्य व्यापारो निवर्तत इत्यर्थः । इयमेवात्यन्तिकप्रलय इत्युच्यते । तथा च श्रुतिः—तस्याभिध्यानाद्योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरिति (श्वे. उ. १।१०) ॥ ६३ ॥

नन्वेवमेकपुरुषस्योपाधौ विवेकज्ञानोत्पत्त्या प्रकृतेः सृष्टिनिवृत्तौ सर्वमुक्तिप्रसङ्ग इति, तत्राह—

इतर इतरवत् तद्दोषात् ॥ ६४ ॥

इतरस्तु विविक्तबोधरहित इतरवद् बद्धवदेव प्रकृत्या तिष्ठति । कुतः ? तद्दोषात् । तस्य प्रधानस्यैव तत्पुरुषार्थासमापनाख्यदोषादित्यर्थः । तदुक्तं योगसूत्रे—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" इति (साधनपा. सू. २२) । तथा च पूर्वसूत्रे या प्रधाननिवृत्तिरुक्ता सा विविक्तबोद्धृपुरुषं प्रत्येवेति भावः । विश्वमायाश्रुतिः (श्वे. उ. १।१०) अपि ज्ञानिनं प्रत्येव मन्तव्या । 'अजा'मिति (श्वे. उ. ४।५) श्रुत्यैकवाक्यत्वादिति ॥ ६४ ॥

सृष्टिनिवृत्तेः फलमाह—

द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥ ६५ ॥

द्वयोः प्रधानपुरुषयोरेवौदासीन्यमेकाकिता । परस्परवियोग इति

यावत् । सोऽपवर्गः । अथवा पुरुषस्यैव कैवल्यम् । अहं मुक्तः स्यामित्येव पुरुषार्थतादर्शनादित्यर्थः ॥ ६५ ॥

नन्वेकपुरुषमुक्तावेव विवेकाकारवृत्त्या विरक्ता प्रकृतिः कथमन्यपुरुषार्थं पुनः सृष्टौ प्रवर्तताम् । न च प्रकृतेरंशभेदान्नैष दोष इति वाच्यम् । मुक्तपुरुषोपकरणैरपि पृथिव्यादिभिरन्यस्य भोगदृष्टिदर्शनादिति । तत्राह—

अन्यसृष्ट्युपरागेऽपि न विरज्यते, प्रबुद्धरज्जुतत्त्वस्येवोरगः ॥ ६६ ॥

एकस्मिन् पुरुषे विविक्तबोधाद्विरक्तमपि प्रधानं नान्यस्मिन् पुरुषे सृष्ट्युपरागाय विरक्तं भवति, किन्तु तं प्रति सृजत्येव । यथा प्रबुद्धरज्जुतत्त्वस्येवोरगो भयादिकं न जनयति मूढं प्रति तु जनयत्येवेत्यर्थः । उरगतुल्यत्वं च प्रधानस्य रज्जुतुल्ये पुरुषे समारोपणादिति ।

एवमिदं रज्जुसर्पादिदृष्टान्तानामाशयमबुद्ध्वैवाऽधुना केचिद्वेदान्तिब्रुवाः प्रकृतेरत्यन्ततुच्छत्वं मनोमात्रत्वं वा तुलयन्ति । एतेन प्रकृतिसत्यतायामिहाप्युक्तदृष्टान्तेन श्रुतिस्मृत्यर्था बोधनीया, न केवलं दृष्टान्तवशेनायमर्थः सिद्ध्यति ॥ ६६ ॥

कर्मनिमित्तयोगाच्च ॥ ६७ ॥

सृष्टौ निमित्तं यत् कर्म तस्य सम्बन्धादप्यन्यपुरुषार्थं सृजतीत्यर्थः ॥ ६७ ॥

ननु सर्वेषां पुरुषाणामप्रार्थकतया नैरपेक्ष्याविशेषेऽपि कञ्चित् प्रत्येव प्रधानं प्रवर्तते, कञ्चित् प्रति निवर्तत इत्यत्र किं नियामकम् । न च कर्म नियामकम् । कस्य पुरुषस्य किं कर्मेत्यत्र नियामकाभावादिति । तत्राह—

नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥ ६८ ॥

पुरुषाणां नैरपेक्ष्येऽप्ययं मे स्वाम्ययमेवाहमित्यविवेकादेव प्रकृतिः सृष्ट्यादिभिः पुरुषानुपकरोतीत्यर्थः । तथा च यस्मै पुरुषायात्मानमविविच्य दर्शयितुं वासना वर्तते तं प्रत्येव प्रधानं प्रवर्तत इत्येव नियामकमिति भावः ॥ ६८ ॥

प्रवृत्तिस्वभावत्वात् कथं विवेकेऽपि निवृत्तिरुपपद्यतां, तत्राह—

नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात् ॥ ६९ ॥

पुरुषार्थमेव प्रधानस्य प्रवृत्तिस्वभावो, न तु सामान्येन । अतः प्रवृत्तस्यापि प्रधानस्य पुरुषार्थसमाप्तिरूपचरितार्थत्वे सति निवृत्तिर्युक्ता । यथा परिषद्वयो नृत्यदर्शनार्थं प्रवृत्ताया नर्तक्यास्तत्सिद्धौ निवृत्तिरित्यर्थः ॥ ६९ ॥

निवृत्तौ हेत्वन्तरमाह—

दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥ ७० ॥

पुरुषेण परिणामित्वदुःखात्मकत्वादिदोषदर्शनादपि लज्जितायाः प्रकृतेः पुनर्न पुरुषं प्रत्युपसर्पणं कुलवधूवत् । यथा स्वामिना मे दोषो दृष्ट इत्यवधारणेन लज्जिता कुलवधूर्न स्वामिनमुपसर्पति तद्वदित्यर्थः । तदुक्तं नारदीये—

सविकारापि मौढ्येन चिरं भुक्त्वा गुणात्मना ।
प्रकृतिर्ज्ञातदोषेयं लज्जयैव निवर्तते ॥ इति ॥

एतदेवोक्तं कारिकयापि—

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥
इति । ( ईश्व ६१ ) ॥ ७० ॥

ननु पुरुषार्थं चेत् प्रधानप्रवृत्तिस्तर्हि बन्धमोक्षाभ्यां पुरुषस्य परिणामापत्तिरिति, तत्राह—

नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥ ७१ ॥

दुःखयोगवियोगरूपौ बन्धमोक्षौ पुरुषस्य नैकान्ततस्तत्त्वतः, किन्तु चतुर्थसूत्रवक्ष्यमाणप्रकारेणाविवेकादेवेत्यर्थः ॥ ७१ ॥

परमार्थतस्तु यथोक्तौ बन्धमोक्षौ प्रकृतेरेवेत्याह—

प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥ ७२ ॥

प्रकृतेरेव तत्त्वतो दुःखेन बन्धमोक्षौ ससङ्गत्वाद् दुःखसाधनैर्धर्मादिभिर्लिप्तत्वात् । यथा पशु रज्ज्वा लिप्ततया बन्धमोक्षभागी तद्वदित्यर्थः । एतदुक्तं कारिकया—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥
इति ( ईश्व. ६२ ) ।

'द्वयोरेकतरस्य चौदासीन्यमपवर्गः' इति सूत्रे च यः पुरुषस्यापवर्ग उक्तः स प्रतिबिम्बरूपस्य मिथ्यादुःखस्य वियोग एवेति ॥ ७२ ॥

तत्र कैः साधनैर्बन्धः कैर्वा मोक्ष इत्याकाङ्क्षायामाह—

रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोश-
कारवद्विमोचयत्येकरूपेण ॥ ७३ ॥

धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः सप्तभीरूपैर्धर्मैर्दुःखहेतुभिः प्रकृतिरात्मानं दुःखेन बध्नाति, कोशकारवत्। कोशकारकृमिर्यथा स्वनिर्मितेनावासेनात्मानं बध्नाति तद्वत्। सैव च प्रकृतिरेकरूपेण ज्ञानेनैवात्मानं दुःखान्मोचयतीत्यर्थः ॥ ७३ ॥

ननु बन्धमुक्ती अविवेकादिति यदुक्तं, तदयुक्तम्। अविवेकस्याहेयानुपादेयत्वात्। लोके दुःखस्य तदभावसुखादेरेव च हेयतोपादेयत्वात्। अन्यथा दृष्टहानिरित्याशङ्क्य चतुर्थसूत्रोक्तं न्याय विवृणोति—

निमित्तत्वमविवेकस्य न दृष्टहानिः ॥ ७४ ॥

अविवेकस्य पुरुषेषु बन्धमोक्षनिमित्तत्वमेव पुरा ( सां सू १।५५ ) उक्तं न स्वविवेक एव नाशित इतो दृष्टहानिरित्यर्थः। एतच्च प्रथमाध्यायसूत्रेषु ( सां सू १।५५–५७ ) स्पष्टम्।

अविवेकनिमित्तात् प्रकृतिपुरुषयोः संयोगः, तस्माच्च संयोगादुत्पद्यमानस्य प्रारब्धदुःखस्य पुरुषे यः प्रतिबिम्बः स एव दुःखभोगो दुःखसम्बन्धस्तन्निवृत्तिरेव च मोक्षाख्यः पुरुषार्थ इति ॥ ७४ ॥

तदेवमादिसर्गमारभ्यात्यन्तिकलयपर्यन्तोऽखिलपरिणामः प्रधानतद्विकाराणामेव। पुरुषस्तु कूटस्थपूर्णचिन्मात्र इत्यध्यायद्वयेन विस्तरतो विवेचितम्। तस्य विवेकस्य निष्पत्त्युपायेषु सारभूतमभ्यासमाह—

तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेकसिद्धिः ॥ ७५ ॥

प्रकृतिपर्यन्तेषु जडेषु नेति नेतीत्यभिमानत्यागरूपात् तत्त्वाभ्यासाद्विवेकनिष्पत्तिर्भवति। इदन्तु सर्वमभ्यासस्याङ्गमात्रमित्यर्थः। तथा च श्रुतिः—"अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति" ( बृ उ २।३।६ ), "स एष आत्मा नेति नेति" ( बृ उ. ३।९।२६, ४।२।४ ) इत्यादिरिति ॥

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते ।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥ इति ॥

यथा—

अस्थिस्थूणं स्नायुयुत मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ।
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमसन्निष्ठं भूतावासमिमं त्यजेत् ॥
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते ॥
(मनु ६।७६–७८) इति ॥

एतदेव कारिकयाऽप्युक्तम्—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥
इति (ईश्व का ६४)

नास्मीत्यात्मन कर्तृत्वनिषेध. । न मे इति सङ्गनिषेध । नाहमिति तादात्म्यनिषेध । केवलमित्यस्य विवरणम्, अविपर्ययाद्विशुद्धमिति । अतोऽन्तरा विपर्ययेण विप्लुतमित्यर्थ । इदमेव केवलत्वं सिद्धिशब्देन सूत्रे प्रोक्तम् । "विवेकख्यातिरविप्लवा हानोपाय." (पा. सू. २।२६) इति योगसूत्रेणैतादृशज्ञानस्यैव मोक्षहेतुत्वसिद्धिरिति ॥ ७५ ॥

विवेकसिद्धौ विशेषमाह—

अधिकारिप्रभेदान्न नियमः ॥ ७६ ॥

मन्दाद्यधिकारिभेदसत्वाद् अभ्यासे क्रियमाणेऽप्यस्मिन्नेव जन्मनि विवेकनिष्पत्तिर्भवतीति नियमो नास्तीत्यर्थ. । अत उत्तमाधिकारम-भ्यासपाटवेनात्मन सम्पादयेदिति भाव. ॥ ७६ ॥

विवेकनिष्पत्त्यैव निस्तारो, नान्यथेत्याह—

बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः ॥ ७७ ॥

सकृद् सम्प्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्थो

१ अनित्य चेति पाठान्तरम् ।

मध्यमविवेकेऽपि सति पुरुषे बाधितानामपि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवतीत्यर्थः ।

विवेकनिष्पत्तिश्चापुनरुत्थानाद् असम्प्रज्ञातादेव भवतीत्यतस्तस्यां सत्यां न भोगोऽस्तीति प्रतिपादयितुं मध्यविवेक इत्युक्तम् । मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवणमननध्यानमात्ररूप इति विभागः ॥

जीवन्मुक्तश्च ॥ ७८ ॥

जीवन्मुक्तोऽपि मध्यविवेकावस्थ एव भवतीत्यर्थः ॥ ७८ ॥

जीवन्मुक्ते प्रमाणमाह—

उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ॥ ७९ ॥

शास्त्रेषु विवेकविषये गुरुशिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिरित्यर्थः । जीवन्मुक्तस्यैवोपदेष्टृत्वसम्भवादिति ॥ ७९ ॥

श्रुतिश्च ॥ ८० ॥

श्रुतिश्च जीवन्मुक्तेऽस्ति—

दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे ।
कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः ॥

'ब्रह्मैव सन् ब्रह्माप्येति' ( बृ० उ० ४।४।६ ) इत्यादिरिति ॥

नारदीयस्मृतिरपि—

पूर्वाभ्यासबलात् कार्यं न लोको न च वैदिकः ।
अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते ॥ इति ॥ ८०

ननु श्रवणमात्रेणाप्युपदेष्टृत्वं स्यात् तत्राह—

इतरथान्धपरम्परा ॥ ८१ ॥

इतरथा मन्दविवेकस्याप्युपदेष्टृत्वेऽन्धपरम्परापत्तिरित्यर्थः । सामस्त्येनात्मतत्त्वमज्ञात्वा चेदुपदिशेत् तर्हि शिष्योऽपि स्वभ्रमेण शिष्यमपि भ्रान्तीकुर्यात् । सोऽप्यन्यं सोऽप्यन्यमित्येवमन्धपरम्परेति ॥८१॥

ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात्, तत्राह—

चक्रभ्रमणवद् धृतशरीरः ॥ ८२ ॥

कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव कियत्कालं चक्रं भ्रमति, एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः ॥ ८२ ॥

ननु ज्ञानहेतुसम्प्रज्ञातयोगेन भोगादिवासनाक्षये कथं शरीरधारणम्। न च योगस्य संस्काराभिभावकत्वे किं मानमिति वाच्यम्। 'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणाम' इति ( वि० पा० ९ ) योगसूत्रतस्तत्सिद्धेः। चिरकालीनस्य विषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकतया लोकेऽप्यनुभवाच्चेति तत्राह—

## संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥

शरीरधारणहेतवो ये विषयसंस्कारास्तेषामल्पावशेषात् तस्य शरीरधारणस्य सिद्धिरित्यर्थः। अत्र चाविद्यासंस्कारलेशस्य सत्ता नापेक्ष्यते। अविद्याया जन्मादिरूपकर्मविपाकाऽऽरम्भमात्रे हेतुत्वात्। योगभाष्ये व्यासैस्तथा व्याख्यातत्वात्, वीतरागजन्मादर्शनादिति न्यायाच्च ( यो सू ३।१।२५ )। न तु प्रारब्धफलककर्मभोगेऽपीति। यत्र च नियमेनाविद्यापेक्ष्यते स प्रयासविशेषरूपो भोगो मूढेष्वेवास्ति। जीवन्मुक्तानां तु भोगाभास एवेति प्रागुक्तम्।

यत्तु कश्चिदविद्यासंस्कारलेशोऽपि जीवन्मुक्तस्य तिष्ठतीत्याह। तन्न। धर्माधर्मोत्पत्तिप्रसङ्गात्। अन्धपरम्पराप्रसङ्गात्। अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च। एतच्च ब्रह्ममीमांसाभाष्ये ( ४।१ ) प्रपञ्चितमिति ॥ ८३ ॥

शास्त्रवाक्यार्थमुपसंहरति—

## विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता नेतरान्नेतरात् ॥ ८४ ॥

उक्ताया विवेकसिद्धितः परवैराग्यद्वारा सर्ववृत्तिनिरोधेन यदा निःशेषतो बाधिताबाधितसाधारण्येनाखिलदुःखं निवर्त्तते तदैव पुरुषः कृतकृत्यो भवति। नेतराज्जीवन्मुक्त्यादेरपीत्यर्थः नेतरादिति वीप्साऽध्यायसमाप्तौ ॥ ८४ ॥

अत्यन्तलयपर्यन्तः कार्योऽव्यक्तस्य नात्मनः ॥
प्रोक्त एवं त्रिकोऽत्र परवैराग्यसाधनम् ॥ १ ॥

इति श्रीविज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये वैराग्याध्यायस्तृतीयः ॥ ३ ॥

# अथ चतुर्थोऽध्यायः ॥ ४ ॥

शास्त्रसिद्धाख्यायिकाजातमुखेनेदानीं विवेकज्ञानसाधनानि प्रदर्शनीयानीत्येतदर्थं चतुर्थोऽध्याय आरभ्यते ।

## राजपुत्रवत् तत्त्वोपदेशात् ॥ १ ॥

पूर्वपादशेषसूत्रस्थविवेकोऽनुवर्तते । राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायत इत्यर्थः । अत्रेयमाख्यायिका—कश्चिद्राजपुत्रो गण्डर्क्षजन्मना पुरान्निःसारितः शबरेण केनचित् पोषितोऽहं शबर इत्यभिमन्यमान आस्ते । तं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति—न त्वं शबरो राजपुत्रोऽसीति । स यथा झटित्येव चाण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमेवालम्बते राजाहमस्मीति । एवमेवादिपुरुषात् परिपूर्णचिन्मात्रेणाभिव्यक्तादुत्पन्नस्त्वं तस्यांश इति कारुणिकोपदेशात् प्रकृत्यभिमानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव, न तु तद्विलक्षणः संसारीत्येवं स्वस्वरूपमेवालम्बत इत्यर्थः ।

तथा गारुडे—

> यथैकहेममणिना सर्वं हेममयं जगत् ।
> तथैवं ज्ञातमीशेन ज्ञातेनाप्यखिलं भवेत् ॥
> ग्रहाविष्टो द्विजः कश्चिच्छूद्रोऽहमिति मन्यते ।
> ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा ॥
> मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते ।
> मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ॥ इति ॥१॥

स्त्रीशूद्रादयोऽपि प्रसङ्गेन ब्राह्मणस्योपदेशं श्रुत्वा कृतार्थाः स्युरित्येतदर्थमाख्यायिकान्तरं दर्शयति—

## पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥

अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्य विवेकज्ञानं जातमेवमन्येषामपि भवेदित्यर्थः ॥ २ ॥

---

१ गारुडीय ब्राह्म इतिहाससमुच्चयम् ।

## आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

उपदेशावृत्तिरपि कर्तव्या। छान्दोग्यादौ श्वेतकेत्वादिकं प्रत्यारुणिप्रभृतीनामसकृदुपदेशोतिहासादित्यर्थः ॥ ३ ॥

वैराग्यार्थं निदर्शनपूर्वकमात्मसङ्घातस्य भङ्गुरत्वादिकं प्रतिपादयति—

## पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

स्वस्य पितापुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योर्दृष्टत्वादनुमितत्वाद्वैराग्येण विवेको भवतीत्यर्थः। तदुक्तम्—

आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ ॥ इति ॥ ४ ॥

इतः परमुत्पन्नज्ञानस्य विरक्तस्य च ज्ञाननिष्पत्त्यङ्गान्याख्यायिकोक्तदृष्टान्तैर्दर्शयति—

## श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ॥ ५ ॥

परिग्रहो न कर्तव्यो यतो द्रव्याणां त्यागेन लोकः सुखी वियोगेन च दुःखी भवति श्येनवदित्यर्थः। श्येनो हि सामिषः केनाप्यपहृत्याऽऽमिषाद्वियोज्य दुःखी क्रियते। स्वयं चेत् त्यजति तदा दुःखाद्विमुच्यते।

तदुक्तम्—

> सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः।
> तदामिषं परित्यज्य स सुखं समविन्दत ॥
>
> (भाग० ११।९।२) इति ॥

तथा मनुनाऽप्युक्तम्—

> नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा।
> तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते ॥
>
> (मनु ६।७८) इति ॥ ५ ॥

## [1]अहिनिर्ल्वयिनीवत् ॥ ६ ॥

---

१ अत्र चोभाभ्यां सूत्राभ्यां ब्रह्मोपासकस्य देहत्यागसमये आरब्धदेहस्य कर्मणः भोगेनैव नाशात् तत्र देहत्यक्तुर्द्वैविध्यम् दर्शयति। आद्येन च यः कर्माधीनं देहपतनमपेक्षते स 'नदीकूलं यथा' इत्यादि दृष्टान्तेन दर्शितः। द्वितीयेन च ज्ञानकर्मसमुच्चयात् भीष्मादय इव स्वाधीनमृत्युरपि स्वेच्छयैव

यथाहिर्जीर्णां त्वचं परित्यजत्यनायासेन हेयबुद्ध्या, तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः । तदुक्तम्—'जीर्णात्वचमिवोरग' ( कूर्म पु. २।२६।४० ) इति ॥ ६ ॥

त्यक्तं च प्रकृत्यादिकं पुनर्न स्वीकुर्यादित्याह—

छिन्नहस्तवद्वा ॥ ७ ॥

यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते तथैवैतत् त्यक्तं पुनर्नाभिमन्येतेत्यर्थः । वाशब्दोऽप्यर्थः ॥ ७ ॥

असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥

विवेकस्य यदन्तरङ्गसाधनं न भवति ■ चेद्धर्मोऽपि स्यात् तथापि तदनुचिन्तनं तदनुष्ठाने चित्तस्य तात्पर्यं न कर्तव्यं, यतस्तद् बन्धाय भवति विवेकविस्मारणतया भरतवत् । यथा भरतस्य राजर्षेर्धर्म्यमपि दीनानाथहरिणशावकस्य पोषणमित्यर्थः । तथा च जडभरतं प्रकृत्य विष्णुपुराणे—

चपलं चपले तस्मिन् दूरगं दूरगामिनि ।
आसीच्चेतः समासक्तं तस्मिन् हरिणपोतके । इति ॥ ८ ॥

बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत् ॥ ९ ॥

बहुभिः सङ्गो न कार्यः । बहुभिः सङ्गे हि रागाद्यभिव्यक्त्या कलहो भवति योगभ्रंशकः । यथा कुमारीहस्तशङ्खानामन्योन्यसङ्गेन झणत्कारो भवतीत्यर्थः ॥ ९ ॥

द्वाभ्यामपि तथैव ॥ १० ॥

द्वाभ्यां योगेऽपि तथैव विरोधो भवत्यत एकाकिनैव स्थातव्यमित्यर्थः । तदुक्तम्—

वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत् तस्मात् कुमार्या इव कङ्कणम् ॥
( भाग. ११।९।१० ) इति ॥ १० ॥

---

दे६. [illegible] भरत 'मृग [illegible]' [illegible] परित्याजितम् ।
तदेव च भगवद्गीतायां प्रतिपादितम्—

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥

आशा यै वश्यर्मिरसे चित्ते सन्तोषवर्जिते ।
म्लाने चक्रमिवादर्शे न ज्ञानं प्रतिबिम्बति ॥
(यो. वासि २।१५।९)

इति वचनान्निराशता योगिनानुष्ठेयेत्याह—

निराशः सुखी पिङ्गलावत् ॥ ११ ॥

आशां त्यक्त्वा पुरुषः सन्तोषाख्यसुखवान् भूयात् पिङ्गलावत् । यथा पिङ्गला नाम वेश्या कान्तार्थिनी कान्तमलब्ध्वा निर्विण्णा सती विहायाशां सुखिनी बभूव, तद्वदित्यर्थः । तदुक्तम्—

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥
(भाग ११।८।४४) इति ।

नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात् । सुखं तु कुतः ? साधनाभावादिति । उच्यते । चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुखमाशया पिहितं तिष्ठति तदेवाशाविगमे लब्धवृत्तिकं भवति । तेजःप्रतिबद्धजलशैत्यवदिति न तत्र साधनापेक्षा । एतदेव स्वार्थं सुखमित्युच्यत इति ॥ ११ ॥

योगप्रतिबन्धकत्वादारम्भोऽपि भोगार्थं न कर्तव्योऽन्यथैव तदुपपत्तेरित्याह—

अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥

सुखी भवेदिति शेषः । शेषं सुगमम् । तदुक्तम्—

गृहारम्भो हि दुःखाय न सुखाय कथञ्चन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १२ ॥

शास्त्रेभ्यो गुरुभ्यश्च सार एव ग्राह्योऽन्यथाऽभ्युपगमभावादादिभिरंशतोऽसारभागेऽन्योन्यविरोधेनार्थबाहुल्येन चैकाग्रताया असम्भवादित्याह—

बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥ १३ ॥

